her objective by pleasing Brahmā. After one thousand years Brahmā appeared before her and gave her the boon asked for by her : "Grant me Sire, that I become a *jīvasūcikā*, living (needle) made of iron or something else. . Brahmā agreed to this saying : "With *vi* prefixed to your name (*sūcikā*) you would become Viṣūcikā."[11] Now, Viṣūcikā is, according to the text, a painful disease caused by the abnormality of wind; according to Suśurta it is cholera in its sporadic form. Thus we see how the disease of Viṣūcikā is represented allegorically as a demoness of that name transformed into a piercing needle made of iron and internally and invisibly eating into the vitals of the people. Now, this derivation of Viṣūcikā from *sūcikā* (needle) with *vi* prefixed to it is quite imaginative and ingenious though not convincing. It leaves cerebralization unexplained. The degree of pain felt by one suffering from the disease is supposed to be equivalent to the pain felt when one is being pierced with needles; and support is lent to this derivation by Suśruta when it expressly says : *sūcibhir iva gātrāṇi tudan saṁtiṣṭhate 'bhitaḥ, yasyājīrṇena sā vaidyair viṣūcīti nigadyate*. The Suśruta, it may be noted, retains the original *s* of *sūcī* and does not read a cerebral instead. The meaning, too, is clear, it is cholera. Viṣūcikā is, therefore, a disease which affects the body in both directions, upwards and downwards by causing motions and vomiting at the same time. Monier Williams regards the form *visūcikā* incorrect.

## References

1. IV.59.14.
2. V.79.11.
3. VI (ii). 130.22.
4. IV.24.11.
5. VI II 158.18.
6. IV.24.11.
7. V.71.55.
8. VI (ii) 5.9.
9. *Mahābhāṣya*. ed. Keilhorn. Vol.II, p.138.
10. The *Yogavāsiṣṭha* gives us another interesting information in the context of the word *vaidūrya*, i.e., that *vaidūrya* or cats eye gem comes into being when the clouds appears in the sky. The drops of rain transform the oyster shells into pearls.
11. III.69.9.

# महाभारते निर्वचनानि

निर्वचनशब्दस्य कोऽर्थ इति प्रथमस्तावदस्माकं जिज्ञासाविषय:। निरुक्तटीकाकृता भगवता दुर्गाचार्येणास्य शब्दस्यार्थ एवं निरूपित:-*अपिहितस्यार्थस्य परोक्षवृतौ अतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनम्।* यत्रैतादृशेषु शब्देषु परोक्षवृत्तिष्वतिपरोक्षवृत्तिषु वा शब्दार्थानां विगृह्य वचनं भवति तदुच्यते निर्वचनशास्त्रमिति, निरुक्तमिति वा। अयमत्र क्रम:। अमूर्तानां भावानामभिव्यञ्जनाय शब्दप्रयोग:। प्रयुक्ते च शब्दे कथं भावाभिव्यक्तिर्भवतीति विश्लेषणात्मिकया पद्धत्या साधनमावश्यकं भवति। तत्रैवं नाम शब्दस्य विश्लेषणं स्याद्येन तस्य चार्थस्य च सामञ्जस्यं प्रकाशेत, भवेत्स नाम कलयैव। अत एवार्थनित्य: परीक्षेतेति भगवतो यास्कस्य नैरुक्तं प्रति निर्देश:। निरुक्ते हि शब्दसाध ने नाग्रह:, कथं शब्दसिद्धिर्भवति, का प्रकृति:, कश्च प्रत्यय:, को वा संस्कारोऽपितु अर्थदृष्ट्या शब्दविश्लेषणे। अत एवाह यास्को 'न संस्कारमाद्रियेत'।

निरुक्तशास्त्रं तु निर्वचनान्येव प्रस्तौति। तत्रैव तस्य चरितार्थता। परं यन्नाम न निर्वचनशास्त्रं तत्रापि परश्शतानि निर्वचनानि दृष्टिपथमुपयान्ति। ब्राह्मणेषु, सूत्रेषु, रामयणमहाभारतयो:, पुराणेषु अन्येषु वा नानाग्रन्थेषु निर्वचनानि पदानां प्रसक्तानुप्रसक्ततयोपस्थापितानि तत्तद्ग्रन्थकर्तृभि:। तानि विचार्य विचार्य विम्रष्टव्यानि विमर्शकै: पुरातनी चिन्तनपद्धतिस्तेभ्य आविष्कृता भवेदिति। प्रायशो ध्वनिसाम्यार्थसाम्यप्रेरितानि हि तानि नाद्यतनेभ्यो विपश्चिद्भ्य: स्वदेरन् दूराकृष्टानि वा प्रतीयेरंस्तथापि नानेनैव हेतुना तानि हेयताकोटिमाटीकेरन्निति धिया तानि विमर्शपदवीमापादयितव्यानि गुणदोषतश्च परिच्छेद्यानि। अस्मिन् प्रबन्धेऽस्माभि: श्रीमहाभारतात् तानि विचायं विचायमभ्युच्चित्य समासेनोपन्यस्यन्ते विचार्यन्ते च। महान् हि ग्रन्थराशिर्महाभारतं नाम। 'महत्त्वाद् भारवत्त्वाच्च (भारवत्त्वात् = सारवत्त्वात्, नीलकण्ठ:) महाभारतमुच्यते' इति महाभारतनिर्वचनेनैवास्य महत्त्वं सुस्पष्टं भवति। अत्र हि स्थाने स्थाने यानि निर्वचनानि समुपन्यस्तानि तानि प्रसङ्गत एव न तु निर्वचनप्रदर्शनधियेति तेषां निरुक्तशास्त्रान्तर्गतेभ्यो निर्वचनेभ्योऽस्ति किञ्चिद्वैशिष्ट्यम। एषु कानिचन निर्वचनानि परम्पराप्राप्तान्येव। ग्रन्थान्तरेष्वपि तथाऽपि तथाऽवलोकनात्। पुत्रशब्दस्य निर्वचनं दृष्टान्तरूपेणात्रोपस्थाप्यते -

*पुन्नाम्नो नरकाद्यस्मात् त्रायते पितरं सुत:।*
*तस्मात् पुत्र इति प्रोक्त: पितॄन् यस्त्राति सर्वश:।।*

इत्यर्वाचीनवाङ्मयात् पुत् + त्र इत्येतत्पुत्रशब्दस्य निर्वचनमुपलभ्यते। एतादृशमेव निर्वचनं महाभारतेऽपि दृष्टिपथमुपयाति -

*पुन्नाम्नो नरकात्पुत्रो यस्मात्त्राता पितृन् सदा।*
*तस्माद् ब्रुवन्ति पुत्रेति पुत्रं धर्मविदो जनाः॥*[२]

*पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः।*
*तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥*[२]

*पितृंस्त्राणात्तारयति पुत्र इत्यनुशुश्रुम।*[३]

*समुत्पन्नेन कौरव्य सत्पुत्रेण महात्मना।*
*त्रातः स पुरुषव्याघ्र पुन्नाम्नो नरकात्तदा॥*[४]

यास्केनाप्येतन्निर्वचनमुल्लिखितम्–पुत्रः पुरु त्रायते, निपरणाद्वा, पुन्नरकं ततस्त्रायत इति वा।

एवमेव जायाशब्दविषयेऽपि सुप्रसिद्धं निर्वचनमेवोपलभ्यते श्रीमहाभारते–

*आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत।*[५]

जायतेऽस्यामिति जाया। जन् धातोर्व्युत्पन्नोऽयं शब्दः। अन्यत्रापीयमेवास्य निरुक्तिः प्रदर्शिता–

*तज्जायाया जायात्वं यदस्यां जायते पुनः।*

क्वचिन्निर्वचनेषु धातुविशेषस्य निर्देशोऽपि भगवता वेदव्यासेन कृतः। तथा हि कन्याशब्दः कमनार्थकात् कन् धातोर्निष्पन्न इति स प्राह–

*सर्वान् कामयते यस्मात् कनेर्धातोश्च भामिनि।*
*तस्मात् कन्येह सुश्रोणि स्वतन्त्रा वरवर्णिनि॥*[६]

क्षत्रियशब्दो महाकविना कालिदासेन 'क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढ' इति ब्रुवता क्षत+त्रा इत्यस्मान्निरुक्तः। एतादृश्येव निरुक्तिर्दृष्टिपथमुपयाति महाभारतेऽपि–

*क्षताच्च नस्त्रायतीति स तस्मात् क्षत्रियः स्मृतः।*

धर्मशब्दो धारणार्थकाद् धातोर्व्युत्पन्न इति 'धारणाद्धर्म इत्याहुरि' त्यादिभ्यो वचनेभ्य उपलब्धं भवति। महाभारतकारोऽप्येवमाह–

*धर्मो हि धृतः कृत्स्नं धारयते जगत्।*[७]
*धारणाद्धर्ममित्याहुर्धर्मो धारयति प्रजाः।*

*यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः॥*[८]
*धनात्स्रवति धर्मो हि धारणाद् वेति निश्चयः।*[९]

*धारणाद् धर्म इत्याहुर्धर्मेण विधृताः प्रजाः।*
*यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः॥*[१०]

राजा प्रकृतिरञ्जनादिति रञ्जधातोर्निष्पत्तिरस्य शब्दस्याभिव्यज्यते यद्यपि तथापि यास्केनान्यैश्च शासनार्थकाद् दीप्त्यर्थकाद्वा राजृधातोरयं निरुक्तः। महाभारते पुनः

प्रकृतिरञ्जनमेव राज्ञः प्रधानं कर्मेति मत्वा रञ्ज्धातोरेवास्य निरुक्तिः सूचिता-

*पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन्।*
*ततो राजेति नामास्य अनुरागा दजायत।।*[11]

*राजा रञ्जयति प्रजाः।*[12]

*रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते।*[13]

*पित्रापरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः।*
*अनुरागात्ततस्तस्य नाम राजेत्यजायत।।*[14]

*यमस्तु कर्मणा तेन भृशं पीडितमानसः।*
*धर्मेण रञ्जयामास धर्मराज इमाः प्रजाः।।*[15]

क्वचिन्महाभारतकार एकस्यैव शब्दस्य नाना निर्वचनानि प्रस्तौति यास्कीयं निरुक्तं च स्मारयति। तथाहि मित्रशत्रुशब्दौ निर्ब्रुवन् स आह-

*मित्रं मिदेर्नन्दतेः प्रीयतेर्वा संत्रायतेर्मानद मोदतेर्वा।*
*ब्रवीति तच्चामुत विप्रपूर्वात्तिच्चापि सर्वं मम दुर्योधनेऽस्ति।।*[16]

*शत्रुः शदेः शासतेः शायतेर्वा शृणातेर्वा श्वयतेर्वाऽपि सर्गे*
*उपसर्गाद् बहुधासूदतेश्च प्रायेण सर्वं त्वयि तच्च मह्यम्।।*[17]

क्वचित् क्वचिद्विलक्षणान्येव निर्वचनानि दृष्टिपथमुपयान्ति। तथाहि शरीरं शृणातेः शम्नातेर्वेति यास्कः, श्रयतेरिति तु वेदव्यासः।[18] पुरुषादः,पुरिशयः, पूरयतेर्वा, पूरयत्यन्तरिति वेति पुरुपशब्दस्य यास्ककृतानि निर्वचनानि परं विषहते[19], पुरं विषहते वेति[20] तु वेदव्यासकृते।। धिनोतीति धनमिति यास्कः। धत्ते धारयते वेति वेदव्यासः।[21] ध्रियते आयम्यमानं, ह्रियते जनाज्जनं, हितं रमणं भवति हर्यतेर्वा स्यात्प्रेप्साकर्मण इति हिरण्यशब्दस्य नाना निर्वचनानि प्रस्तौति यास्को हिरण्मयमित्येकमेव तु वेदव्यासः।[22] अभ्यतितो गृहान् भवति, अभ्येति तिथिषु परकुलानि वेति अतिथिशब्दस्य यास्ककृते निर्वचने, अनित्यस्थितोऽतिथिरिति वेदव्यासकृतं निर्वचनम्।[23]

क्वचिच्छब्दाः प्रत्यक्षवृत्तयो भवन्ति। तत्र निर्वचनवृत्तिर्न क्लेशकरा। यथा क्षर्धतोः क्षरशब्दः -

*कृतस्नमेतावतस्तात क्षरते व्यक्तसंज्ञकम्।*
*अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः।।*[24]

एवमेव न क्षरम् अक्षरमिति अक्षरशब्दः -

*तदक्षरं न क्षरतीति यद्धि।*[25]

वसुधाशब्दो वसुपूर्वकाद् दधातेर्निष्पन्नो भवेदिति प्रत्यक्षमेव। तथैव च महाभारतम्-

*ररक्ष वसुसम्पूर्णां वसुधां वसुधाधिपः।।*[26]

*तस्येयं वसुसम्पूर्णा वसुधा वसुधाधिप।*[27]

*वसुधा वसुसम्पूर्णा वर्धते भूतिवर्धनी।*[२८]

*आत्मप्रत्ययकोशस्य वसुधेयं वसुन्धरा।*[२९]

प्रथनात्पृथिवीति प्रथ्धातोः पृथिवीशब्दव्युत्पत्तिः। सैवाध उद्धृते पद्ये ध्वन्यते-

*प्रथिता धनतश्चेयं पृथिवी साधुभिः स्मृता।*[३०]

एकत्र पुनः पृथोरपत्यमिति पृथ्वीशब्दस्य व्युत्पत्तिः प्रदर्शिता -

*ततोऽभ्युपगमाद्राज्ञः पृथोर्वैन्यस्य भारत।*
*दुहितृत्वमनुप्राप्ता देवी पृथ्वीति चोच्यते।*[३१]

मेदिनीशब्दे मेदःशब्ददर्शनात्मधुकैटमाख्यानमाश्रित्य तयोर्मेदसा परिप्लुतेत्यर्थे मेदः शब्दाद् भूमार्थे मत्वर्थीय इनिः, सकारलोपे मेदिनीशब्दव्युत्पत्ति प्रदर्शिता। श्रीमहाभारते-

*आसीदियं समुद्रान्ता मेदिनीति परिश्रुता।*
*मधुकैटभयोः कृत्स्ना मेदसाऽभिपरिप्लुता।।*[३२]

एवमेवोर्वीशब्दोऽपि विस्तृतार्थादुरुशब्दात्स्त्रियां व्युत्पादयितुं शक्योऽपि काश्यपमाख्यानमाश्रित्य। ऊरुशब्दाद् व्युत्पादितः -

*ऊरुणा धारयामास कश्यपः पृथिवीं ततः।*
*निमज्जन्तीं तदा राजंस्तेनोर्वीति मही स्मृता।।*[३३]

तदेतत्कल्पनोत्थं न विचारसहम्। ऊरुशब्दाद् व्युत्पत्तौ ऊर्वीतिशब्दप्रसक्तेरूकारह्रस्वत्वाभ्युपगमे गौरवप्रसङ्गाच्च।

शिलानां समूहः शैल इति शिलाशब्दात्समूहार्थेऽपि शैलशब्दः। सगरशब्दाच्चापत्यार्थेऽणि सागरशब्दः उभावप्येतै प्रत्यक्षवृत्ती। तथैव च महाभारतम्-

*तत उत्सारयामास शिलाः शतसहस्रशः।*

*धनुष्कोट्या तदा*
*वैन्यस्तेन शैला विवर्धिताः।*[३४]
*सागरत्वं च लेभे स कर्मणा तेन तस्य ह।।*[३५]

खे चरतीति खेचरशब्दस्य व्युत्पत्तिः। व्युत्पतयनुसारी च महाभारतप्रयोगः-*अध्वानं सोऽतिचक्राम खेचरः खेचरन्निव।*

व्याक्रियन्ते शब्दा अनेनेति वैयाकरणशब्दस्य व्युत्पत्तिः। व्याङ्पूर्वकात्क- रोतेर्ल्युटि व्याकरणशब्दस्य सिद्धिः। व्याकरणमधीते वेद वेति वैयाकरण इति वैयाकरणशब्दस्य व्याख्यानम्। महाभारतकारेण *सर्वार्थानां व्याकरणाद्वैयाकरण उच्यत*[३६] इति वैयाकरणशब्दे व्याङ्पूर्वकं करोतिं पश्यता समीचीनमेवाभ्यधायि। एवमेव *श्रुतेन श्रोत्रियो भवतीत्य*[३७]भिदधता। तेन सुप्रसिद्धैव श्रोत्रियशब्दस्य निरुक्तिः सूचिता। श्रुतेन श्रोत्रिय इति श्रुतशब्दाच्छोत्रियरूपनिष्पत्तिरित्यभिहितं भवति। श्रोत्रशब्दादेव यदि सा व्याख्यायिष्यत समीचीनतरकमभविष्यत्।

केषाञ्चन नगराणां नामानि तत्तद्वैशिष्ट्यं तत्तद्राजनिर्मितिं वाऽभिलक्ष्य व्याख्यातानि। तथा हि द्वारवती बहुद्वारेति कृत्वान्वर्थां संज्ञां लेभे। भूम्न्यत्र मतुब्व्याख्यातव्यो भवति। *कृतां द्वारवतीनाम्ना वहुद्वारां मनोरमामि*[३८] ति महाभारते पाठः। अस्ति श्रावस्ती नाम नगरी। तस्यास्तन्नाम कुत इति चेदुच्यते-*जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता।*[३९] एतदुचितमिव प्रतिभाति। निर्मातॄणां राज्ञां नाम्ना नैकासां नगरीणां रव्यातत्वदर्शनात्। न केवलं नगराणां नगरीणां वाऽन्येषामपि पदार्थानां तत्तद्वैशिष्ट्यवशान्नामोपलम्भ इति महाभारतकारः। तथा कुशवदाख्यस्य ह्रदस्य कुशेशयपद्मवत्वात्तथाविधं नाम सञ्जातमिति महाभारतवचसा ध्वन्यते- *ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम्।*[४०] एवमेव वितरणैर्वृतत्वा- द्वैतरणीति नदीविशेषस्य संज्ञा संवृत्तेति महाभारतकारः- *अत्र वैतरणी नाम नदी वितरणैर्वृता।*[४१] विनशनमपि तथैव, सरस्वत्यास्तत्र नाशात्-अदर्शनात्-

*यस्मात्सा भरतश्रेष्ठ द्वेषान्नष्टा सरस्वती।*
*तस्मात्तदृषयो नित्यं प्राहुर्विनशनेति ह।।*[४२]

बाह्लीकदेशस्यापि तथाविधा संज्ञा बाह्लीकाख्यानां पिशाचानां वशादेव संवृत्ता। बाह्लीकशब्दस्य व्युत्पत्तिर्महाभारतकारेण बहिरिति ह्लीक इति च पिशाचयोः कयोश्चन नामविशेषाभ्यामेव प्रदर्शिता-

*बहिश्च नाम ह्लीकश्च विपाशायां पिशाचकौ।*
*तयोरपत्यं बाह्लीका नैषा सष्टिः प्रजापतेः।।*[४३]

बहि+ह्लीक इति बह्लीकः। यद्येतद्यथार्थं स्यात्तर्हि भाषाशास्त्रिणां समाक्षरलोपन्यायोऽत्र प्रवृत्तिमापन्न इति प्रतिभाति। तेन च पूर्वहकारलोपः। तत्क्षतिसमारोपणाय च पूर्वाकारस्य दीर्घः।

क्वचित्पूर्वाख्यानान्याश्रित्य शब्दा निरुच्यन्ते महाभारतकारेणेति मेदिनीशब्दप्रसङ्गे पूर्वमेवावोचाम। सैव प्रवृत्तिर्निषादशब्दनिर्वचनप्रसङ्गेऽप्यवलोक्यते। अधार्मिकस्य वैन्यस्य मथ्यमानादूरोः समुद्भूतः कश्चन ह्रस्वः कृष्णवर्णः पुरुषः। तमत्रिरुवाच निषीदेति। यतो हि स निषीदेत्युक्तः, तत एव निषादेति संज्ञया ख्यातः-निषीदनिषाद।[४४] तदेतत् कल्पनोत्थमशास्त्रीयं च भाति । एतादृशानि निर्वचनानि कौतुकमेव जनयन्ति केवलं, न तु ज्ञानसमृद्धिमित्यलं वाचां विस्तरेण।

महाभारते नैकेषां राज्ञाम्, ऋषीणां, देवानां च नामानि निरुक्तानि। तत्र विशेषतो राज्ञाम् ऋषीणां च नामनिर्वचने यत्किञ्चिद् ध्वनिसाम्यमाख्यानमाछयमेन अर्थौचित्यं च प्रयोजकं महाभारतकारस्यामवत्तच्च पूर्ववदेव कौतुकवर्धकमेव। तथाहि क्षुधातोरिक्ष्वाकुशब्दः। *यन्मनुरक्षौत्तत इक्ष्वाकुः।*[४५] अत्र क्षसादृश्यादेव क्षवतेरिक्ष्वाकुशब्दो निरुक्तः। एवमेवौर्वशब्दस्य निरुक्तिरूरुशब्दात्प्रदर्शिता। ऊरोरयमिति और्वः। ऊरूं विनिर्भिद्य जातः[४६] इति पुरातनमा- ख्यानमपि नाम्न औचित्यप्रदर्शनाय उद्धृतम्। तथैव सत्यव्रतः पितृपरितोषगुरुदोग्ध्रीवाप्रो- क्षितोपयोगरूपत्रिविधशङ्कु ( व्यतिक्रम) दर्शनात् वसिष्ठेन त्रिशङ्कुरित्युक्तस्तथैव च प्रसिद्धिं गतः।[४७] दण्डाभिधस्य राज्ञो दण्ड इति नामापि अनन्तजनानां दमनाद्वा अशिष्टानां

दण्डनाद्वा यथार्थमिति कृत्वा दमेर्दण्डेर्वा निरुक्तं महाभारतकारेण।[४८] राजा कुवलाश्वः धुन्धुवधाद् धुन्धुमार इत्याख्यां गतः।[४९] प्रथनात्पृथुरिति राज्ञः पृथोर्नाम्नो व्युत्पत्तिर्लोकान्प्रथयिष्यतीति कृत्वा।[५०] तथैव प्रजानां भरणाद् भरत इत्याख्या। एताः सर्वा निरुक्तय ऋजुतया बुद्धिमुपारोहन्ति औचित्यकोटिं च नातिक्रामन्ति। मान्धातृशब्दस्य निरुक्तिस्तु नैतादृशी। मांधास्यतीति मान्धातेति प्राचीनाख्याने शतक्रतोरुक्त्या तन्नामप्रसिद्धेः।[५१] अत्र मामिति पदस्य पानार्थेकेन धेट्धातुना योगे रूपसिद्धिः। ध्वनिसाम्यमेवैतादृशनिर्वचने प्रमुखं प्रेरकम्। कथानकयोगस्तु तन्निर्वाहायेति नातितिरोहितं स्यात्प्रेक्षावताम् यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति वदेतादृश्यः सर्वा अपि निरुक्तयो निरुक्त्याभासा एव निरुक्तिप्रयासा एव वा विद्वन्मनोविनोदफलकाः। वसुमनसो राज्ञो नाम्नो निर्वचनं तु स्पष्टमेवेति सुग्रहम्। वसुशब्दस्तत्र प्रत्यक्षवृत्तिर्मनःशब्दश्च।[५२] विकुक्षित्वाद्विकुक्षिरिति तन्नाम्नो याथार्थ्यम्।[५३] अत एव सोऽयोधतां प्राप्त इति भगवद्वेदव्यासोक्तिः। शशमत्तीति शशाद इति शशादाख्यस्य राज्ञो नामापि निर्वक्तुमशक्यम्। एतन्निर्वचनं चास्य शब्दस्य शशं भक्षयित्वा शशादो मृगयां गत[५४] इत्यनेन सूच्यते। अयं शब्दोऽपि प्रत्यक्षवृत्तिरेव। नाम्नो धातोश्च प्रत्यक्षावभासित्वात्। यद्यपि नाम बहुधा यादृच्छिकमेव भवति, संज्ञिनः शशादत्वं भवतु वा मा भूत्ततथापि तादृशार्थोपलम्भात् संज्ञायां तथा व्याख्यानप्रवृत्तेः। एतादृशमेव व्याख्यानं सगरशब्दस्यापि। सह गरेणेति सगरः। सहस्य सभावे रूपम्। एतन्नामयाथार्थ्यप्रतिपादनायापि पुरातनमाख्यानमेकं समुपस्थापि महाभारतकारेण। विदुलासञ्जयसंवादे सम्यग् जयति शत्रूनिति सञ्जय इति तन्नाम्नो निरुक्तिर्विदुलोक्त्या ध्वनिता भवति। नाम्ना सञ्जयोऽपि सन् त्वं तादृशो नासीति तदुक्तेः।[५५] सर्वं दमयतीति सर्वदमन[५६] इति सर्वदमनशब्दस्य व्याख्या महाभारतीया। एकत्र महाभारते काशिराजसुतायाः श्वफल्कपत्न्या गान्छा उल्लेखः। 'गा ददातीतिगान्दी'[५७] ति तस्या नामनिर्वचनमपि निर्दिष्टम्। सामान्यतस्त्वनया व्युत्पत्या गोदा इति नाम्ना भवतिव्यम्। अत्र पुनः गान्दीति नाम गोशब्दस्य गाम् आदेशः, टाप् स्थाने च डीष्योगः। उपरिष्टान्निर्दिष्टानां निरुक्तीनां सम्यक्परीक्षणेनैतदवदातं भवति यद् महाभारतकारदृष्ट्या नाम्नो यथार्थत्वमस्त्येव। निर्वचनदृष्ट्या नामतो ये गुणा ज्ञानकर्मीभवन्ति तेषां व्यक्तिविशेषेष्वस्ति विद्यमानत्वम्। तेनार्थस्य निर्वचनस्य चास्त्यविच्छिन्नः सम्बन्धः। यतो ह्यमुको गुणोऽमुके जनेऽतोऽस्य तन्नामधेयमित्येष क्रमो नामनि व्यक्तिविशेषे च संस्थापितो महाभारतकारेण। तदेतदर्थनित्यः परीक्षेतेतेत्यस्यैवोपबृंहणमिति नापेक्ष्यते बहु वचः।

महाभारते कुन्तीपुत्रोऽर्जुनो नानानामभिर्निर्दिष्टो धनञ्जयविजयश्वेतवाहनकिरीटी-बीभत्सु-अर्जुन-जिष्णु-कृष्णैः। तत्र सर्वाण्येव नामानि यथार्थानीति महाभारतकारः। तत्र नानावैशिष्ट्यवत्त्वात्तस्य कृते नानानामानि प्रसिद्धिमागतानि। प्रत्येकं च नाम यथार्थम्। व्युत्पत्तिलभ्यस्य तदर्थस्य नाम्न्यौचित्यदर्शनात्। एवं हि महाभारतकारोऽर्जुनस्य प्रत्येकं नाम्नो निर्वचनमुखेनौचित्यं प्रतिपादयति –

*सर्वाञ्जनपदाञ्जित्वा वित्तमाच्छिद्य केवलम्।*
*मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम्।।*

*अभिप्रयामि सङ्ग्रामे यदहं युद्धदुर्मदान्।*
*नाजित्वा विनिवर्तामि तेन मां विजयं विदुः।।*
*श्वेताः काञ्चनसंनाहा रथे युज्यन्ति मे हयाः।*
*सङ्ग्रामे युध्यमानस्य तेनाहं श्वेतवाहनः।।*

*उत्तराभ्यां च पूर्वाभ्यां फल्गुनीभ्यामहं दिवा।*
*जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः।।*

*पुरा शक्रेण मे दत्तं युध्यतो दानवर्षभैः।*
*किरीटं मूर्ध्नि सूर्याभं तेन माहुः किरीटिनम्।।*

*न कुर्यां कर्म बीभत्सं युध्यमानः कथञ्चन।*
*तेन देवमनुष्येषु बीभत्सुरिति मां विदुः।।*

*उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे।*
*तेन देवमनुष्येषु सव्यसाचीति मां विदुः।।*

*पृथिव्यां चतुरन्तायां वर्णोदुर्लभः समः।*
*करोमि कर्म शुक्लं च तेन मामर्जुनं विदुः।।*

*अहं दुरापो दुर्धर्षो दमनः पाकशासनिः।*
*तेन देवमनुष्येषु जिष्णुनामास्मि विश्रुतः।*

*कृष्णावदातस्य सतः प्रियत्वाद् बालकस्य वै।*
*कृष्ण इत्येव दशमं नाम चक्रे पिता मम।।*[५८]

अत्र धनञ्जयतीति धनञ्जयः, विजयते इति विजयः, श्वेतानि वाहनानि अस्येति श्वेतवाहनः, फल्गुनीभ्यां जात इति फाल्गुनः, किरीटमस्यास्तीति किरीटी, बीभत्सं (कर्म) नास्तीति बीभत्सुः–अबीभत्सुः बीभत्सुः, नञोऽत्र लोपः, सव्येनापि सचते गाण्डीवविकर्षण इति सव्यसाची, अर्जुनः (शुक्लः) इत्यर्जुनः, जयति परान् अभिभवतीति जिष्णुः, कृष्ण इति कृष्ण इत्येवंरूपेणार्जुनस्य दशनाम्नां व्याख्यानं सूचितं महाभारतकृता।

मीमस्य पुत्रो घटोत्कचोऽपि कथं तामाख्यामलभतेत्यपि निर्दिष्टं महाभारते। यतो हि स मातरं घटमासोत्कच इत्यभ्यभाषत ततोऽस्य घटोत्कच इति संज्ञा पप्रथे।[५९] घटमासोत्कच > घटोत्कच। अत्र भासशब्दस्यान्तर्वर्तिनो लोपः। एवमेवं रावणशब्दोऽपि रुधातोर्ण्यन्ताद् व्याख्यातः, रावयति लोकान् इनि कृत्वा।[६०] रामायणेऽप्ययं शब्द एवमेव व्याख्यातः–

*यस्माल्लोकत्रयं चैतद्रावितं भयमागतम्।*
*तस्मात्त्वं रावणो नाम नाम्ना राजन् भविष्यसि।।*[६१]

'रावणो लोकरावण'[६२] इत्यनेनापि इयमेव निरुक्तिः सूचिता भवति।

अथ ऋषीणां नामनिर्वचनान्युपक्रम्यन्ते। महर्षिधौम्याख्याने शिष्येणोपमन्युना गुरोराज्ञया जलनिरोधार्थं केदारखण्डमेव दारितम्। ततश्च उद्दारणादुद्दालक इति तस्य संज्ञा पप्रथे।[६३] उद्दारकः > उद्दालकः। रलयोरभेदः। कश्यप ऋषिः काश्यानि शरीराणि पाति रक्षति पिबति भुङ्क्ते पाययति शोषं याति वेति तथासञ्ज्ञकः।[६४] काश्य>कश्य+पा=कश्यपः। काश्यपो

मार्तण्ड इत्यप्युच्यते। मृतोऽण्ड इति मृताण्ड:। मृताण्ड एव मार्तण्ड:।[६५] आकारह्रस्व:। गौतमो गोदमो गां भूमिं स्वर्गं च दमयति वशीकरोतीति।[६६] गोदम>गौतम। दकारस्य तकार:। ओकारस्य औकार:। गालवस्तु विश्वामित्रपत्न्या गले बद्ध[६७] इति प्राचीनाख्यानम्। तस्मादेव तस्य तादृश्याख्या। गलबद्ध>गालव। अकारस्य दीर्घ:। बकारस्य वकारो, दकारधकारयोश्च लोप:। जमदग्निशब्दस्यातिविलक्षणैव निरुक्तिर्दत्ता महाभारते—जाजमद्यज्ञशब्दाज्जमदग्निशब्दो निष्पन्न:।[६८] भूयो भूयोऽतिशयेन जमन्ति युगपदनेकेषु यज्ञादिष्वनेकवारं पुन: पुनर्भक्षयन्ति हवींषि ते जायमन्तो देवा:। इज्यन्ते देवता अस्मिन्निति यज्ञोऽग्नि:। जाजमद्यज इत्यत्राद्यपदे प्रथमाक्षरलोपे द्वितीयस्याग्नित्वे जमदग्निरिति रूपम्। जाजमत् जमत् यज अग्नि। जमत् अग्नि जमदग्नि। जाजमन्तोऽग्निश्चास्मिन् सन्तीति जमदग्निमान्। ततो मतुब्लोपेन जमदग्निरिति पदम्। भरद्वाजशब्दस्य महाभारते 'प्रजा वै वाजस्ता एष बिभर्ति याद्बिभर्ति तस्माद् भरद्वाज' इति श्रुत्यनुसारिण्येव निरुक्ति: प्रदर्शिता। सुतशिष्यद्विजभार्यां बिभर्तीति भरद्वाज:।[६९] अत्र शत्रन्तो बिभर्ति: प्रथमपदम्। वाजश्येति द्वितीय:। एवं भरद्वाज: साहसमन्नं वा यस्येति भरद्वाजशब्दस्य व्याख्यानम्। यदि प्रथमपदमकारान्तो भरशब्द:, द्वाजशब्दश्च द्वितीयस्तर्हि पुत्रादीन् बिभर्तीति भर:। द्वाभ्यां जात: द्वाज:, सङ्करज इत्यर्थ: पर्यवस्यति। अङ्गिरस्शब्दस्याङ्गारशब्दान्निरुक्ति: महाभारते प्रदर्शिता।[७०] सा तु अङ्गारसदृशाक्षरयोजनायास्तत्र दर्शनादेव। अङ्गार>अङ्गिरा। आकारस्येकार:, अकारस्य चाकार:। एवमेवात्रिशब्दो रात्रिशब्दस्यैव परिवर्तितरूपम् इति निर्देशो महाभारते।[७१] अरात्रि> अत्रि। मध्यवर्तिनो रा इत्यक्षरस्यात्र लोप: कल्प्य:। अरय: कामादय: सन्त्यस्मिन्नित्यरं पापं तस्मात्त्रायत इत्यरात्रि:। अरिशब्दान्मत्वर्थीय अर्शआद्यचि यस्येतीकारलोपे अरमिति सिध्यति। यस्मादरात्रिस्तस्मादत्रि:। नीलकण्ठेन महाभारतटीकाकृता अन्तीत्यद् मृत्युस्तस्मात्त्रायत इत्यत्रि: (अद्+त्रा) इत्यपराऽपि व्युत्पत्ति: प्रदर्शिता। सा हि साधने लाघवान्मूलपाठादुचिततरा प्रतीयते। भृगुशब्दो महाभारते भ्रस्ज् धातोर्व्युत्पादित: भृज्जति इति भृक्।[७२] नीलकण्ठेन भृज्जतीत्यस्य पावयतीत्यर्थ: कृत:। पाणिनिधातुपाठे नुन: पाकार्थको भृज्जति:। तेन भृज्जति पचतीति तेनार्थ: स्यात्। स्यान्नाम नीलकण्ठस्तात्पर्यार्थमत्र ब्रूते। पाकेनानिष्टस्य दाहात् पावनत्वसम्भव:। भृगिति क्विबन्तादुकार: प्रत्यय: कल्प्य:। भृज्जति पावयतीति भृक्, उकारप्रत्यये कृते भृगु: पावकोऽग्निर्वा, अग्निज्वाला वा। तेन भृगुशब्दस्य साक्षाज्ज्वालेत्येवार्थ:। वसिष्ठष्य ऋषेर्नाम महाभारते द्विधा निरुक्तम्। वसुमच्छब्दाच्च वस्तृशब्दाच्च।[७३] तत्र वसुमच्छब्दो यदि प्रकृतिस्तर्हि तस्मादिष्ठनि मतुब्लोपे टिलोपे च वसिष्ठ इति रूपम्। यदि वस्तृशब्द: प्रकृतिस्तर्हि तस्मादिष्ठनि टिलोपे च वसष्ठि इति रूपम्। एतद्व्युत्पत्तिद्वयाभिप्रायेणैव *वसिष्ठत्वाच्च वासाच्च वसष्ठि* इति महाभारतोक्ति:। विश्वामित्रशब्दविषयेऽस्ति श्रुति:–*विश्वस्य ह वै मित्रं विश्वामित्र आस।* एतया विश्वस्य मित्रं विश्वामित्रशब्दस्य *व्युत्पत्ति*: सूच्यते। यास्केनापि सर्वमित्र इति व्याख्याता विश्वस्य सर्वस्य मित्रम् इति विश्वामित्रशब्दस्य व्युत्पत्तिरूरीकृता। महाभारते पुनर्द्विविधाऽस्य व्युत्पत्ति: प्रदर्शिता। विश्वासां सर्वासां गवामिद्रयाणां मित्रमिति विश्वामित्र:, विश्वे देवता मित्रमस्येति च विश्वामित्र:।[७४] विश्वशब्दो हि सर्ववाची। सर्वत्वं च यस्य कस्यापि भवतुमर्हति। इन्द्रियाणां वा देवानां वाऽन्येषामपि येषां

केषाञ्चित्। अतः स्वाभिप्रायानुसारेण महाभारतकारव्याख्यानम्। महाभारतकारो हि भगवान् वेदव्यासः। स वेदान् विव्यासेति तस्य यथार्थं नाम वेदव्यास इति। वेदानां व्यासः शाखाभेदेन विस्तार इति वेदव्यासः।[७५] अत्र धर्मधर्मिणोट भेदाद्येन वेदव्यासः कृतः सोऽपि वेदव्यासः संवृत्तः। द्वैपायन इति वेदव्यासस्यापरा संज्ञा। मात्रा सत्यवत्या स यमुनाद्वीपे परित्यक्तो जातमात्र एव। अत एव तस्य नाम द्वैपायन इति। द्वीपमेव अयनं न्यासस्थानं यस्य स द्वीपायनः। द्वीपायन एव द्वैपायनः।[७६] स्वार्थे तद्धितः ब्रह्मणः। पुत्रस्य सनत्कुमारस्य नाम्नो निर्वचनमप्युपलभ्यते महाभारते। प्रत्यक्षवृत्तिरेष शब्द इति नास्त्यस्य दुरूहता। निरन्तरार्थकः सनत्कुमारः। सनत् कुमार इति सनत्कुमारः।[७७] निरन्तरकुमार इत्यर्थः। कुमार इव रागादिद्वेषशून्यः। यथोत्पन्नः कुमारो रागद्वेषादिशून्यो भवति तथा नैरन्तर्येण प्रवृद्धोऽपि रागद्वेषादिशून्य इति तन्नाम्नस्तस्मिंश्चरितार्थता। गण्डस्य ऋषेर्नाम महाभारते गडिध ातोर्निरुक्तम्।[७८] अत्र पाठान्तरे धातोरर्थोऽपि निर्दिष्टः।[७९] स च स एव यः पाणिनिना ध ातुपाठे प्रतिपादितः, गडिवदनैकदेश इति। उन्नतगण्डत्वादृषेर्गण्ड इति नाम। एवमेव पशूनां सखा इति पशुसखस्य ऋषेरन्वर्थकं नाम।[८०] एवमेवान्वर्थकं नाम शुनःसखस्यापि।[८१] शुनः सखा इति शुनःसखः। ऋषिपत्नीनां नामसु विशेषतोऽरुन्धत्या नामनिर्वचनमेव निर्दिष्टं महाभारते। भर्तुर्वसिष्ठस्यानन्तरमव्यवानेन मनो रुन्धतीति तस्या तादृशी समाख्या।[८२] अरुषोऽतिकठिनान् धरादीन् दधातीत्यरुन्धतीति दकारलोपेन नुमागमेन च तद्रूपनिष्पत्तिः। अनुरुन्धतीन्यत्र नुकारलोपेन वा।

हरिवंशे योगधर्मनिरतानां हंसानामुल्लेखः। तेषु अणुहत्येत्येकस्य नाम निर्दिष्टम्। तन्नाम्नः अणून् सूक्ष्मान् अर्थान् हन्ति प्राप्नोतीति निर्वचनम् 'अणुं पदमध्यगमत'[८३] इति वचसा सूचितं महाभारते।

सम्प्रति देवतानां नामान्यधिकृत्य प्रस्तूयते महाभारतीयेषु निर्वचनेषु विचारः। अश्विनाविति देववैद्यौ सुप्रथितौ। व्यश्नुवाते सर्वे रसेनाथवौर्णवाभमतेन अश्वैरश्विनौ, अश्ववन्ताविति अश्विशब्दस्य यास्केन प्रदर्शिते निरुक्ती। महाभारतकारोऽपि अश्वशब्दादेवास्य निर्वचनं मन्यते। केवलं तत्रार्थभेदः। और्णवाभमतेन अश्ववन्तावश्विनौ इत्यर्थः महाभारतकारमतेन अश्वस्यापत्यमश्विनावित्यर्थः।[८४] महाभारतेऽश्वरूपान्मार्तण्डादन-योरुत्पत्तिर्वर्णिता। तेन तन्मतेऽपत्यार्थेऽत्र इनिः स्यात्। मरुच्छब्दस्यापि महाभारते विलक्षणमेव निर्वचनमुपलभ्यते। मरुतो मितराविणो मितरोचिनो वा, महद् द्रवन्तीति वेति यास्कोक्त्या मित+रु, मित+रुच्, महद्+द्रु इति प्रकृतिभ्यो मरुच्छब्दव्युत्पत्तिः। महाभारतकारमतेन पुनः मा+ रुद् प्रकृतेरस्य व्युत्पत्तिः।[८५] मा शब्दाकारह्रस्वत्वे मरुद् अथवा मरुत् शब्दनिष्पत्तिः परिस्फुटैव। दिव्यां कश्यपेनाहितो गर्भ इन्द्रेण वज्रेण पाटितः, पाट्यमानश्च स रुरोद। मा रोदीरिति तमिन्द्रोऽभ्यभाषत। तेन खण्डशः कृताद् गर्भात्सभुद्भूतानां देवानां मरुदिति सञ्ज्ञेति महाभारतीयमाख्यानम्। विशिष्टाग्निनामसु पुष्टिमतिरित्येकं नाम पुष्टिं प्रयच्छतीति सतः।[८६] पुष्टिरस्यास्तीति पुष्टिमान्। यस्य पुष्टिरस्ति स पुष्टिं प्रदातुमपि शक्नोति। पुष्टिमच्छब्दादिकारः प्रत्ययः। तेन पुष्टिमतिरिति रूपम्। अपरस्याग्निविशेषस्य महाभारते निर्दिष्टं नाम भरत इति भरतीति सतः।[८७] निगदव्याख्यात एष शब्दः। एवमेव निगदव्याख्यातौ

स्तः स्वयम्भूसावित्रीशब्दौ। स्वयम्भूतो जात इति स्वयम्भूः।[८८] सवित्रा प्रोक्तेति सावित्री।[८९] 'तिस्र एक देवता इति नैरुक्ताः। तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति। अपि वा कर्मपृथक्त्वादि' ति यास्कः। देवतानां माहाभाग्यं कर्मपृथक्त्वं वा तासां नानानामसु हेतुरिति यास्काशयः। अतो हेतोरेव विष्ण्वादिदेवानां नानानामानि महाभारते यत्र तत्र दृष्टिपथमुपयान्ति तद्देवदृष्ट्यौचित्यदिशा च निरुक्तानि महाभारतकारेण। तत्र प्रथमं तावद्विष्णुनामान्युपक्रम्यन्ते। तन्नामनिर्वचनमेकैकश उद्योगपर्वणि हरिवंशे च विशेषतो निरूपितम्। तथा हि न च्यवते इत्यच्युतः।[९०] न जायत इत्यजः,[९१] अधो न क्षीयते जातु इत्यधोक्षजः,[९२] उत्तरपदावयवलोपः, अथवा अध इति पृथिवी, अक्षू व्याप्तौ इत्यतोऽक् आकाशः, ते उभे अधोक्, पृथिवीनभसी स जयति सङ्गेन धारयतीति अधोक्षजः, अधिक्+स+जः, नकारलोपे अधोक्षजः, अथवा पृथक्पदैरेवास्य निर्वचनम्,[९३] तथाहि अतन्ति सततं गच्छन्त्यस्मिन्निति अः, अत सातत्य गमन इत्यतः, तकारलोपः, धोक्षः दुह प्रपूरण इत्यस्मादौणादिकः सः, गुणभष्भावौ, जायतेऽस्मात् सर्वमिति जः, अ+धोक्ष+जः अधोक्षजः, जगल्लयस्थितिजन्मस्थानमित्यर्थः, इन्द्रस्योपरि स्थापित इत्युपेन्द्रः,[९४] अत्र रिलोपः, उपरि+इन्द्र, उप+इन्द्र उपेन्द्र, भूवाचकः = सत्तावाचकः शब्दः, कृषि+णः कृष्णः,[९५] इकारलोपः, कृषति भूमिमिति वा कृष्णवर्ण इति वा कृष्णः,[९६] केशिनं वाति हिनस्तीति केशवः,[९७] केशि+वः (मत्वर्थीयस्येनेर्लोपः), केशाः अंशवः सन्त्यस्येति वा केशवः[९८] (मत्वर्थीयो वः), कः ब्रह्मा, ईशः शिवः स्तोऽस्य, तदङ्गसम्भूतत्वादिति वा केशवः,[९९] परशुखण्डनात् खण्डपरशुः,[१००] गा गोपायति पातीति गोपः,[१०१] गा विन्दतीति गोविन्दः,[१०२] गवामिन्द्र इति वा गोविन्दः[१०३] (अत्र वकारागमो रकारलोपश्च), गां वाणीं वेद इदि वा गोविन्दः[१०४] जनं दस्युजनमर्दयतीति जनार्दनः,[१०५] जयतीति जिष्णुः,[१०६] त्रीणि ककुदानि उच्चप्रदेशाः सन्त्यस्येति त्रिककुद्,[१०७] उत् उत्कर्षेण प्रकाशत इत्युदरः, दमोऽस्यास्तीति दामः, दामश्चासावुदरश्चेति दामोदरः,[१०८] नराणामयनो नारायणः,[१०९] नारा आपोऽयनं यस्येति वा नारायणः,[११०] पुण्डरीकमिव पुण्डरीकं हृदयकमलं धाम तत्र सन्नपि न क्षीयत इति पुण्डरीकाक्षः[१११] पूरणात्सदनाच्च पुरुषः, स चासावुत्तमश्चेति पुरुषोत्तमः,[११२] पूरयतीति पूरुः, सीदन्त्यस्मिन्निति सः तस्मात् पुरुषः, पुरुषश्चासावुत्तमश्चेति पुरुषोत्तमः, बृहत्वाद् बृंहणत्वाच्च ब्रह्म, मधुं तन्नामकं दैत्यं सूदयति नाशयतीति मधुसूदनः,[११३] मधूनि इन्द्रियाणि सूदयति इति वा मधुसूदनः,[११४] सर्वतत्त्वमयत्वान्मधूनि पृथिव्यादीनि हन्ति संहरति गच्छन्ति वा एनमिति मधुहा,[११५] मां =धीं वृतिं मौनाद् ध्यानाद्योगाच्च धवयति दूरीकरोतीति माधवः,[११६] मा = विद्या तस्या धवः स्वामीति वा माधवः,[११७] मननान्मुनिः,[११८] यमनाद्यतिः,[११९] वसनाद् वासुदेवः, वस्ते आच्छादयति, मायया आवृणोतीति वा, वस्यति स्तभ्नाति भुवनमिति वा, वसत्यस्मिन् भुवनमिति वा वासुः, देवो द्योतमानश्चेति वासुदेवः,[१२०] वसन्ति देवा अस्मिन्नति वा वासुदेवः (बृहत्वाद्व् यापकत्वात्), वेवेष्टि सर्वमिति विष्णुः,[१२१] वृषं धर्मं भसयतीति वृषभो वेदः तदेव ईक्षणं चक्षुरिव ज्ञापकं यस्येति वृषभेक्षणः,[१२२] वृषो=धर्मः, कपिः=श्रेष्ठः, वृषाकपिः,[१२३] (अकारदीर्घः), धर्मश्रेष्ठ इत्यर्थः, विशब्दः पक्षिवाची, व्योमचारित्वसामान्याद्वायुतेजोमेघरूपवाची च, कुः पृथिवी, ठः आकाशः, एतेषां समाहारो

विकुण्ठम् (णकारागमः), विकुण्ठानां श्लेषणकर्ता इति वैकुण्ठः,[१२४] अथवा विगता कुण्ठा पञ्चानां भूतानां मेलने सामर्थ्यमस्येति विकुण्ठः, स एव वैकुण्ठः[१२५] (स्वार्थे तद्धितः), शिपिना = निष्कलेन रूपेण आविष्टं यत्किञ्चिदनेनेति शिपिविष्टः[१२६] (आकारलोपः), श्रवणानि श्रवाः, शुचयः श्रवा यस्य स शुचिश्रवाः,[१२७] सत्त्वमबाधितमस्येति सत्वतः, सत्वत एव सात्वतः[१२८] (स्वार्थिकोऽण्), हरति ऋतुषु भागमिति वा, प्राणिन इति वा,[१२९] हरिर्हरिर्वर्णो वाऽस्येति हरिः[१३०] हर्षाद् हृषीकेशः, हृष्यत्यनेनेति वृत्तिसुखं[१३१] स्वरूपानन्दः, ईशनवान् अतो हृषीकेशः, हृषीकाणीन्द्रियाणि तेषामीश इति वा हृषीकेशः।[१३२]

यथा भगवतो विष्णोस्तथैव भगवतः शिवस्यापि नैकेषां नाम्नां निर्वचनं महाभारतं उपलभ्यते। त्रीण्यम्बकानि नेत्राण्यस्येति त्र्यम्बकशब्दस्य सुप्रथितं निर्वचनम्। महाभारते पुनः किञ्चिदन्यदेवोक्तम्। तत्र हि तिस्रो देवीर्भजत[१३३] इति त्र्यम्बकशब्दस्यार्थः कृतः। तेन तत्र नेत्रार्थाम्बिकशब्दस्थानेऽम्बिकाशब्द एव तदभ्युपगत इति सूचितं भवति। ततश्च तिस्रोऽम्बिका अस्येति त्र्म्बक इति व्याख्यानमस्य शब्दस्य (इकारलोपोऽत्र परिकल्प्यः)। एवमेव धूम्रश्चासौ जटी धूर्जटिरिति[१३४] धूर्जटिशब्दस्य निर्वचनम् (मकारलोपः), पशून् पातीति पशुपतिः[१३५] पशूनां सखेति पशुसखः,[१३६] महयन्ति लोका यं स महः, महश्चासावीश्वरश्चेति महेश्वरः,[१३७] निर्दहति,[१३८] मांसशोणितमज्जाद इति वार्थे दहतेरत्तेर्वा रुद्रः।[१३९]

'उ मा' इति पार्वत्या निषेधवचनोच्चारणेन[१४०] उमाशब्दनिर्वचनं प्रदर्शितं महाभारत-कारेण। एवमेव कार्तिकेयनामनिर्वचनं कृत्तिकानामपत्यमिति[१४१] कृत्वा तेन प्रादर्शि। तस्यैव कार्त्तिकेयस्यापरे नामनी स्कन्दश्च गुहश्च। तत्र स्कन्दः स्कन्दतेः,[१४२] शिवतेजः स्कन्दात्, गुहायाश्च गुह[१४३] इति तयोर्महाभारतकारकृते निर्वचने।

एवं महाभारते यत्र तत्र निर्दिष्टानि निर्वचनानि महाभारतकारस्य शास्त्रान्तरवन्निर्वचनशास्त्रेऽपि प्रौढिं परमां पिशुनयन्ति। निघण्टोर्निरुक्तस्य तत्कर्तुर्यास्कस्य चापि स्पष्टतो नामोल्लेखो महाभारतेऽस्ति।[१४४] यास्कीयां पद्धतिमाश्रित्य स्वोपज्ञानि नानानिर्वचनानि प्रस्तुतानि महाभारते भगवता वेदव्यासेन। तेभ्यः शब्दस्वरूपविषये ऋषेर्दर्शनमाविर्भवति गूढं च तद्रहस्यमुद्भिनत्तीत्येव समासेनोपन्यस्योपसंह्रियतेऽस्माभिरयं महाभारतीयनिर्वचनविचारः।।

## सन्दर्भग्रन्थसूचिः

* लेखोऽयं पुण्यपत्तनीयभाण्डारकरप्राच्यविद्यासंशोधनमन्दिरेण प्रकाशितं महाभारत-माधारी कृत्य निबद्धः।

१. हरिवंशः, ६६.२२
२. आदिपर्व, ६८.३८
३. आश्वमेधिकपर्व, १३.४५.
४. हरिवंशः, ५.२५.
५. वनपर्व, १३.६२.
६. तदेव, २११.१३.

७. आदिपर्व, ५७.५.
८. कर्णपर्व, ४१.५०.
६. शान्तिपर्व, ११.१५.
१०. तदेव, ११०.११.
११. तदेव, ११.१३१.
१२. तदेव, ५३.३६.
१३. तदेव, ५१.१२.
१४. हरिवंशः, ५.२६.
१५. तदेव, 8.41
१६. कर्णपर्व, 29.23
१७. तदेव, 29.14
१८. श्रयणाच्छरीरं भवति, शान्तिपर्व, 224, 43
१६. उद्योगपर्व, 131.33
२०. मइंप, 131.35
२१. धत्ते धारयते चेदमेतस्मात्कारणाद्धनम्, उद्योगपर्व, 112.2.
२२. यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते, उद्योगपर्व, 12.1.
२३. अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते, अनुशासनपर्व, 10.0.180
२४. शान्तिपर्व, 291.34.
२५. तदेव, 194.24
२६. वनपर्व, 54.38.
२७. तदेव, 26.34.
२८. उद्योगपर्व, 34.26.
२६. तदेव, 38.23
३०. शान्तिपर्व, 59.128.
३१. हरिवंशः, 6.40.
३२. तदेव, 6.36.
३३. शान्तिपर्व, 49.64.
३४. हरिवंशः, 6.9.
३५. तदेव, 10.52.
३६. उद्योगपर्व, 43.36.
३७. वनपर्व, 297.29.
३८. हरिवंशः, 9.26.
३६. तदेव, 9.46.
४०. वनपर्व, 130.15.
४१. उद्योगपर्व, 107.14.

४२. शल्यपर्व, 36.2.
४३. कर्णपर्व, 30.44.
४४. हरिवंशः, 5.18.
४५. तदेव, 9.38.
४६. तदेव, 35.50
४७. तदेव, 10.18.
४८. शान्तिपर्व, 15.8.
४६. हरिवंशः, 5.47.
५०. शान्तिपर्व, 29.130.
५१. तदेव, 29.77.
५२. उद्योगपर्व, 114.17.
५३. हरिवंशः, 9.39.
५४. तदेव, 9.42.
५५. उद्योगपर्व, 134.7.
५६. आदिपर्व, 38.7.
५७. हरिवंशः, 28.31.
५८. विराटपर्व, 36.11-20.
५६. आदिपर्व, 143.34.
५०. वनपर्व, 259.40.
६१. द्रोणपर्व, 16.37.
६२. तदेव, 16.38.
६३. आदिपर्व, 3.29.
६४. अनुशासनपर्व, 95.29.
६५. हरिवंशः, 8.4.
६६. अनुशासनपर्व, 95.33.
६७. हरिवंशः, 9.95-100.
६८. अनुशासनपर्व, 95.37.
६६. तदेव, 95.31.
७०. तदेव, 95.15.
७१. तदेव, 95.25.
७२. तदेव, 95.15.
७३. तदेव, 95.17.
७४. तदेव, 95.35.
७५. आदिपर्व, 57.73.
७६. तदेव, 57.71.

७७. हरिवंशः, 12.16.
७८. उद्योगपर्व, 106.10.
७९. तदेव, 68.15.
८०. तदेव, 38.8.
८१. तदेव, 38.10.
८२. शान्तिपर्वं, 330.19.
८३. हरिवंशः, 67.58.
८४. शान्तिपर्व, 328.43.
८५. तदेव, 330.49.
८६. वनपर्व, 211.1.
८७. तदेव
८८. हरिवंशः, 1.25.
८९. उद्योगपर्व, 106.10.
९०. तदेव, 38.15.
९१. तदेव, 68.8.
९२. तदेव, 68.10.
९३. शान्तिपर्व, 330.19.
९४. हरिवंशः, 62.44.
९५. उद्योगपर्व, 68.5.
९६. शान्तिपर्व, 328.43.
९७. तदेव, 330.41.
९८. हरिवंश, 88.48.
९९. तदेव, 30.7.
१००. हरिवंशः 88.48.
१०१. तदेव, 30.7.
१०२. उद्योगपर्व, 68.13.
१०३. तदेव
१०४. तदेव, 68.6.
१०५. हरिवंशः, 88.50.
१०६. उद्योगपर्व, 68.13.
१०७. शान्तिपर्व, 330.28.
१०८. उद्योगपर्व, 68.8.
१०९. तदेव, 68.10.
११०. हरिवंशः, 1.24; 88.44.
१११. उद्योगपर्व, 68.6.

११२. तदेव, 68.6.
११३. तदेव, 68.10.
११४. तदेव, 68.4.
११५. हरिवंशः, 88.49.
११६. उद्योगपर्व, 68.7.
११७. हरिवंश,, 88.49.
११८. तदेव, 88.52
११९. तदेव, 88.52
१२०. उद्योगपर्व, 68.3.
१२१. तदेव, 68. 13, हरिवंशः 88. 43. (अत्र व्याप्तिरिति धातोरर्थस्याप्युल्लेखः छातोर्व्याप्तिश्च दर्शनात्)।
१२२. उद्योगपर्व, 68.7.
१२३. शान्तिपर्व, 330.24.
१२४. शान्तिपर्व, 330.15.
१२५. तदेव, 330.6.
१२६. तदेव, 330.36.
१२७. तदेव, 330.13., उद्योगपर्व, 68.7.
१२८. तदेव, 330., हरिवंशः, 88.
१२९. तदेव, 330.3.
१३०. उद्योगपर्व, 68.1.
१३१. अनुशासनपर्व, 88.47. (चित्रशालामुद्रणालयसंस्करणम्).
१३२. द्रोणपर्व, 173.86.
१३३. अनुशासनपर्व, 146.12.
१३४. द्रोणपर्व, 17.342; अनुशासनपर्व, 143.14.
१३५. अनुशासनपर्व, 95.43.
१३६. द्रोणपर्व, 173.83; अनुशासनपर्व, 146.15.
१३७. द्रोणपर्व, 173.83
१३८. तदेव
१३९. अनुशासनपर्व, 13.17.18.
१४०. हरिवंशः, 3.36.
१४१. अनुशासनपर्व, 84.77.86.14
१४२. तदेव
१४३. नैघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम्।। यास्को मामृषिमव्यग्रो नैकयज्ञेषु गीतवान्। शान्पिर्व (चिव्रशालाप्रेससंस्करण, पूना) 342.88.72.
१४४. हल

# समासविचारः

*समासस्तु चतुर्धेति प्रायोवादस्तथापरः।*
*योऽयं पूर्वदार्थप्राधान्यविषयः स च।।*

प्राचीनैः समासः चतुर्धाऽङ्गीकृतोऽव्ययीभाव-तत्पुरुष-द्वन्द्व-बहुव्रीहिरूपः। तत्र नव्या दोषमुद्भावयन्ति। ते त्वेतन्मतं सम्यगिति नाङ्गीकुर्वन्ति। तेषां मते भूतपूर्वः, दृन्भू, आयतस्तूः, वागर्थाविव इत्यादीनां चतुर्विधसमासेषु अन्तर्भावाभावात् असङ्ग्रहापत्तिः। एवमेव पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यव्ययीभावस्य लक्षणम्, उभयपदार्थप्रधानो द्वन्द्व इति द्वन्द्वस्य लक्षणाम्, अन्यपदार्थप्रधानो बहुव्रीहिरिति बहुव्रीहिलक्षणमपि प्राचीनोक्त तैर्न युक्तमित्यभ्युपेयते। उन्मत्तङ्गमित्यादौ अन्यपदार्थे च संज्ञायामित्यनेन अव्ययीभावे समासे पूर्वपदार्थप्राध न्याभावादव्ययीभावस्य लक्षणानाक्रान्तत्वेनाव्याप्तिः। बहुव्रीहिलक्षणाक्रान्तत्वेनातिव्याप्तिश्च। एवं सुप्प्रतीत्यत्र सुप्प्रतिना मात्रार्थे इत्यनेनाव्ययीभावे उभयपदार्थप्राधान्यात् तत्पुरुषलक्षणातिव्याप्तिः। अव्ययीभावलक्षणानाक्रान्तत्वेनाव्याप्तिश्च। अर्धपिप्पलीत्यत्र अर्धं नपुंसकमित्यनेन समासे पिप्पलिसम्बन्ध्यर्धं इति पूर्वपदार्थप्राधान्यादव्ययीभावलणाक्रान्त-त्वेनातिव्याप्तिः। तत्पुरुषलक्षणाना क्रान्ततवेनाव्याप्तिश्च।द्वित्रा इति बहुव्रीहौ उभयपदार्थप्राधान्यात्द्वन्द्वलक्षणाक्रान्तत्वेनातिव्याप्तिः, बहुव्रीहिलक्षणानाक्रान्तत्वेनाव्याप्तिश्च। शशकुशपलाशमित्यादिद्वन्द्वे समाहारान्यपदार्थप्राधान्याद् बहुव्रीहिलणाक्रान्त-त्वेनातिव्याप्तिः। द्वन्द्वलक्षणानाक्रान्तत्वेनाव्याप्तिश्च। एवं चतुर्धा समास इति मतं दोषाक्रान्त-त्वान्नाङ्गीकार्यम्, षोढा समास इत्यपरं मतं च स्वीकार्यम्। स च षोढा समास इत्थं निर्दिष्टः-

*सुपां सुपा तिङा नाम्ना धातुनाऽयतिङां तिङा।*
*सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः।*

सुपां सुपा समासः। पदद्वयमपि सुबन्तम्। यथा राजपुरुषः। सुपां तिङा। पूर्वपदं सुबन्तम्, उत्तरपदं तिङन्तम्। यथा पर्यभूषयत्, अनुव्यचलत्। गतिमतोदात्तवता 'तिङाऽपि समास' इति वार्तिकात् समासः। सुपां नाम्ना समासः यथा कुम्भकारः। उपपदमतिङिति समासः। 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति सुबुत्पत्तेः प्राक् समासः। सुपां घातुना-उत्तरपदं धातुमात्रम्, न तिङन्तम्। यथा कटप्रूः आयतस्तूः। क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्चेति वार्तिकात्समासः। तिङां तिङा समासः। यथा पिबतखादता, पचतभृज्जता। 'आख्यातमाख्यातेन क्रियासातत्ये' इति सूत्रात्समासः। तिङा सुबन्तेन समासः। पूर्वपदं तिङन्तमुत्तरपदं सुबन्तम्। यथाः जहिस्तम्बः। 'जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधातीति मयूरव्यंसकाद्यन्तर्गतगणसूत्रात् समासः। अयं षड्विधोऽपि

समासः सह सुपा इत्यत्र योगविभागेन भाष्ये व्युत्पादितः। तथा हि प्रत्येकं वाक्यपरिसमाप्तिः। यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र प्रत्येकं भुजिक्रियापरिसमाप्तिः। प्रत्येकं समाससंज्ञावारणाय सदृशशब्दप्रयोजनम्। तदनन्तरं 'गर्गाः शतं दण्ड्यन्ताम्। अर्थिनश्च राजानो हिरण्येन भवन्ति' इति दृष्टान्तेन समुदाये वाक्यपरिसमाप्तिः। लक्ष्यानुरोधातक्वचित् प्रत्येकं वाक्यपरिसमाप्तिरिति दृष्टान्ताश्रयणम्। यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः। क्वचित् समुदाये वाक्यपरिसमाप्तिरिति दृष्टान्ताश्रयणम, लक्ष्यानुरोधात्। समासे समुदाये वाक्यपरिसमाप्तिरिति न्यायस्यैवाश्रयणम्। एवं सिद्धे सति सह सुपेतिसूत्रे यत्सहग्रहणं करोति तस्यैतत्प्रयोजनं योगाङ्गं यथा विज्ञायेत। सति योगाङ्गे योगविभागः करिष्यते। सह सुप् समस्यते। केन? समर्थन। अनुव्यचलत्, अनुप्राविशत्। ततः सुपा च सह सुप्समस्यते। अयमधिकारः लक्षणं च। यस्य समासस्यान्यल्लक्षणं नास्ति तस्येदं लक्षणं भवति। अधिकारः प्रयोजनम्। देवदत्तः पचतीत्यादौ समानाधिकरणेन समाससंज्ञावारणम्। समासप्रकरणे जहत्स्वार्था वृत्तिरजहत्स्वार्था वतिर्वेत्यपरः प्रश्नो विमर्शमर्हति। तत्र यदि जहत्स्वार्था वृत्तिरङ्गीक्रियते तर्हि राजपुरुषमानयेत्युक्ते पुरुषामात्रस्यानयनं प्राप्नोति। औपगवमानयेत्युक्ते अपत्यमात्रस्यानयनं प्राप्नोति। जहत्स्वार्थावृत्तिस्वीकारे पुनरुभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति। एवं सति जहत्स्वार्थाजहत्स्वार्थवृत्त्योः का नाम वत्तिर्न्याय्यतरा स्यात्। उभये एवेति शास्त्रकृतः। प्रथमं जहत्स्वार्थवृत्तेर्न्याय्यत्वमुपपाद्यते। लोके पुरुषोऽयं राजकर्मणि प्रवर्तमानः स्वं कर्म जहाति। यथा तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहातिं। एवं राजा पुरुषार्थे वर्तमानः स्वमर्थं जह्यत्। एवमुपगुश्च अपत्यार्थे वर्तमानः स्वमर्थं जह्यत। राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं तु न। एवमौपगवमानयेत्युक्ते अपत्यमात्रस्य च नानयनम्। जहदप्यसौ स्वार्थं नात्यन्ताय जहाति। यः परार्थविरोधि स्वार्थः तं जहाति। यथा तक्षा राजकर्मणि प्रवर्तमानः स्व तक्षकर्म जाहति न तु हिक्कितादीनि, एवं परार्थविरोध विशेषणं नाम तत्र हास्यति। अथवान्वयाद्विशेषणं भविष्यति। यथा घुतघटः, तैलघटः। अथवा समर्थाधिकारोऽयं वृत्तौ क्रियते। सामर्थ्यं नाम भेदः संसर्गो वा। अन्यमते भेदसंसर्गो वा सामर्थ्यम्। यथा राज्ञ इत्युक्त सर्वं स्वं प्रसक्तम्, पुरुष इत्युक्ते स्वामी प्रसक्तः। इहेदानीं राजपुरुषमानयेत्युक्ते राजा पुरुषं निवर्तयति स्वामिभ्यः। पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यः। एवमेतास्मिन्नुभयतो व्यवच्छिन्ने यदि राजा स्वार्थं जहाति कामं जहातु नाम। न कदाचिज्जहत्स्वार्थायां वृत्तौ पुरुषमात्रस्यानयनं भविष्यति। विशेषणाविशिष्टस्यैवानयनात्। अथवा अजहत्स्वार्था वृत्तिरेवास्तु। लोके दृश्यते भिक्षुकोऽयं द्वितीयां भिक्षां समासाद्य पूर्वां न जहाति सञ्चयायैव प्रवर्तते। न जहाति पदानि स्वार्थं यस्यां साऽजहत्स्वार्था वृत्तिः। अस्यामुभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति राजपुरुष इत्यत्र द्विवचनं प्राप्नोति। तत्र न प्रथमाया द्विवचनं नात्र प्रथमासमर्थो राजा। नापि षष्ठ्याः द्विवचनं प्राप्नोति। नात्र षष्ठीसमर्थः पुरुषः। एवन्तर्हि अभिहितः सोऽर्थोऽन्तुर्भूतः प्रातिपदिकार्थः सम्पन्न इति सम्बन्धस्याप्यत्र प्रातिपदिकार्थत्वेन प्रथमायाः द्विवचनं प्राप्नोति। नैषः दोषः। राजपुरुषशब्दात् सङ्घातात् विभक्त्योत्पत्तव्यम्। तेन च सङ्घातेन अवयवार्थोपकृत एकत्वसङ्ख्यायुक्तो विशिष्टोऽर्थः प्रतिपाद्यते इति तदाश्रयमेवकवचनं प्रवर्तते। न तु गुणभूतावयवसङ्ख्याश्रयं द्विवचनम्। अथवा परस्परव्यपेक्षा सामर्थ्यम्। एकार्थीभाववादिनोऽपि

राजपुरुषपदयोः परस्परं विना बोधाजनकत्वमूलाकाङ्क्षासमये एव तद्बलात्सम्बन्धांशे विशिष्टशक्तिकल्पनम्। व्यपेक्षावादिनस्तु आकांक्षावशादेव तद्भानम्, न तु विशिष्टोपस्थापकशक्ति कल्पना। का पुनः शब्दयोर्व्यपेक्षा? स्वं स्वमर्थं प्रति गुणभावात् शब्दयाः परस्परव्यपेक्षा न सम्भवति। सत्यम्। प्रमातृगतां व्यपेक्षामर्थे समारोप्य शब्दाः संस्क्रियन्ते। न शब्दयोर्व्यपेक्षा। यथा राज्ञः पुरुष इत्युक्ते राजा पुरुषमपेक्षते, दानादिक्रियानिमित्तं राज्ञः स्वाभ्यमुपजायते, ममायमिति। पुरुषोऽपि राजानमपेक्षते अहमस्येति। पुरुषस्य प्रतिग्रहादिनिमित्तः स्वत्वोत्पादः तयोरभिसम्बन्धस्य षष्ठी वाचिका भवति। पुरुषस्य प्रतिग्रहादिनिमित्तः स्वत्वोत्पादः तयोरभिसम्बन्धस्य षष्ठी वाचिका भवति। यथा कष्टं श्रित इति क्रियाकारकयोरभिसम्बन्ध स्य द्वितीया बाधिका भवति। नन्वेवमपि समर्थः पदविधिरिति एकमेव सूत्रम्। एकस्मात् सूत्रात् एकार्थीभावः सामर्थ्यम्, व्यपेक्षा सामर्थ्यमिति उभयोर्लाभः कथम्? समोऽयमर्थशब्देन सह समासः। सञ्चोपसर्गः। उपसर्गाश्च पुनरेवमात्मका भवन्ति यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते येन समः सामर्थ्यं स्यात्। तत्र प्रयोगादेतद् गन्तव्य नूनमत्र कश्चित्प्रयोगार्हः शब्दो न प्रयुज्यते येन समः सामर्थ्यं स्यात्। यथा धूमं दृष्टवां अग्निरत्रेति गम्यते, त्रिविष्टब्ध कं च दृष्ट्वा परिव्राजक इति च गम्यते, सूत्रेऽपि कश्चन प्रयोगार्हः शब्दो न प्रयुज्यते। उच्यते सङ्गतार्थ समर्थम्, संसृष्टार्थं समर्थम्, सम्प्रेक्षितार्थं समर्थं, सम्बद्धार्थ समर्थम्। यदा एकार्थीभावः सामर्थ्यमर्थात् जहत्स्वार्था वृत्तिः तदा एवं विग्रहः करिष्यते सङ्गतार्थः समर्थः, संसृष्टार्थः समर्थः। तद्यथा सङ्गतं घृतम्, सङ्गतं तैलमित्युक्ते एकीभूतमिति गम्यते। संसृष्टार्थः समर्थः इति विग्रहेऽपि। यथा संसृष्टोऽग्निरित्युच्यते, एकीभूत इति गम्यते। यदा व्यपेक्षा सामर्थ्यं तदा एवं विग्रहः करिष्यते सम्प्रेक्षितार्थः समर्थः सम्बद्धार्थः समर्थः। अत्र व्यतिषङ्गः सम्बद्धार्थः। यो रज्जवा वा कीले वा व्यतिषक्तो भवति, अर्थात् रज्ज्वादिनिमित्तः संश्लेषो व्यतिषङ्गः । तात्पर्यमिदं यद् बध्नातिर्व्यतिपङ्गे एव न वर्तते, किन्तर्हि अहानावपि। तद्यथा सम्बद्धाविमौ दम्यौ इत्युच्येते यौ अन्योऽन्यं न जिहीतः। अथवा एवंजातीयकेषु बध्नातिर्वते। यथा अस्ति नो गर्गैः सम्बन्धः, अस्ति नो वत्सैः सम्बन्धः इति भाष्ये जहत्स्वार्था वृत्तिरजहत्स्वार्था वृत्तिश्चोक्ता। तत्र अजहत्स्वार्थायां वृत्तौ पूर्वपदार्थप्रधान इत्यादिलक्षणं निर्दुष्टं, तथापि अजहत्स्वार्थायां वृत्तौ वाक्यवत्सङ्ख्याविशेषोपसर्जनविशेषणादीनां प्रसङ्गात् तदभावो वचनेन प्रतिपाद्यः। वावचनं च कर्तव्यम, समानार्थस्य वाक्यस्य अनिवृत्त्यर्थम्। शब्दस्य स्वाभाविकं रूपं कदाचिन्नित्यदर्शनाश्रयेण अनुगम्यते। कदाचिद् अबुधबोधनार्थं कार्यदर्शनाश्रयेण। कार्यपक्षे बहवो वार्ताधर्मा वचनेन प्रतिपाद्याः। तार्किकैः अजहत्स्वार्था वृत्ति समासे स्वीक्रियते। तन्मतेऽतिगौरवं भवति। वाक्यपदीयेऽपि वृत्तिवाक्यवैधर्म्ये–

*निर्धारणादिविषये व्यपेक्षैव यतः स्थित।*
*समासप्रतिषेधानां ततो नास्ति प्रयोजनम्॥*

इत्युक्तम्। व्यपेक्षालक्षणसामर्थ्यं वाक्ये नियतं निर्धारणविषये। अत एव गवां कृष्णा सम्पन्नक्षीरतमा इति निर्धारणं न प्रतीयते। निर्धारणाहेतोः बाह्यस्य अपेक्षणीयस्य भावात् असामर्थ्यात् न समासः। एवं पूरणगुणेत्यादिप्रतिषेधोऽपि न कर्तव्यः। इत्याशयेनाह–

*विधिभि: प्रतिषेधैश्च भेदाभेदनिदर्शनम्।*
*कृद्द्वन्द्वैकवद्भावे सङ्घवृत्त्युपदेशवत्।।*

समासविधिना भेद: संसर्ग एकार्थीभाव: स्वभावसिद्धा ज्ञाप्यते। प्रतिषेधेन अभेदोऽसंसर्गो व्यपेक्षालक्षणा मन्दमतीन् प्रति ज्ञाप्यते। यथा द्वन्द्वस्य प्राणितूर्याङ्गादौ स्वाभाविकी सङ्घे समाहारे तिरोहितावयवभेदे वृत्ति। प्राणितूर्यसेनाङ्गानाम् इति एकवद्भावशास्त्रेण समाहारे ऐवति नियमो न अन्वाख्यायते। दधिपय: प्रभृतीनान्तु स्वाभाविकी प्रोद्भूतावयवभेदा इतरेतरयोगे वृत्ति: प्रतिषेधेन ज्ञाप्यते। विभाषा वृक्षमृगेत्यादिना वृक्षमृगादीनामुभयत्र शास्त्रमनुवादकम्। नहि अस्ती शब्दानां शक्तिर्वचनशतेनापि कर्तुं पार्यते। 'न वा समाहारैकत्वात्' इत्यादिना भाष्ये एकवद्भावस्य प्रत्याख्यानं कृतम्। एवं वृत्तिविग्रहयो: समर्थ: पदविधिरित्यत्र सामान्येन यत्सामर्थ्यं निर्दिष्टम् तदेव व्यपेक्षैकार्थीभावलक्षणभेदेन शब्दशक्त्यनुसारिभि: विभक्तम्। तदुक्तम्-

*सामर्थ्यमविशेषोक्तमपि लोकव्यवस्थया।*
*वृत्यवृत्यो: प्रयोगज्ञैर्विभक्तं प्रतिपत्तृभि:।।*

अयमाशय: - समर्थपदेन सामर्थ्यवाचिना सङ्गतार्थत्वं वृत्तिवाक्यगतमविशिष्टमुक्तम्। लक्ष्ययोर्लक्ष्यमूलत्वात्स्मृते: सूत्रकाराशयमनुसृत्य वृत्तावेकार्थीभावो वाक्ये व्यपेक्षेति विभाग: कृत:। एवं परिभाषापक्षे सत्त्वादिविधावपि व्यपेक्षासामर्थ्यसम्भवादस्यैव व्यापार:। सामर्थ्यभेदस्य नियतत्वात्, वावचनानर्थक्यं च स्वभावसिद्धत्वादित्युक्त' भष्ये। वाक्ये एकार्थीभावाभावकृता: संख्याविशेषादय: प्रतीयन्ते समासेन। तदुक्तम्-

*अर्थस्य विनिवृत्तत्वाल्लुगादि न विरुध्यते।*
*एकार्थीभाव एवात: समासाख्यो विधीयते।।*

यत्र गमकं तत्रैव विशेषणयोग: एकार्थीभावेऽपि। इत्याशयोनाह-

*सम्बन्धिशब्द: सापेक्षो नित्यं सर्व: प्रयुज्यते।*
*स्वार्थवत्सा व्यपेक्षाऽस्य वृत्तावपि न हीयते।।*

यथा देवदत्तस्य गुरुकुलमित्यत्र देवदत्तस्य गुरो: कुलम्, इति वाक्याद्यदर्थप्रतीतिर्भवति तदर्थप्रतीति: समासादपि इति गमकत्वादत्र समास:। ऋद्धस्य राजपुरुष इति न प्रयोग:।ऋद्धस्य राज्ञ: पुरुष इति वाक्येन यदर्थप्रतीतिर्न तदर्थप्रतीतिर्ऋद्धस्य राजपुरुष इत्यनेन इत्यगमकत्वान्नात्र समास:। वस्तुतस्तु प्रक्रियायां वाक्योपमर्देन वृत्तेरन्वाव्यानात् कथमंत्यन्तभेद इत्याशयेनोक्तं भर्तृहरिणा-

*अबुधान् प्रत्युपायांश्च विचित्रा: प्रतिपत्तये।*
*शब्दान्तरत्वादत्यन्तं भेदो वाक्यसमासयो:।।*

राजपुरुषादयो विशिष्टार्थवृत्तय: संघाता: परमार्थतो निरंशा:। एवं परिकल्पित-पूर्वोत्तरावयवप्रविभागेन व्युत्पाद्यन्ते इति मन्दमतय: अतिसारूप्याद्उपायोपेययोरैक्यम-ध्यवस्यन्ति। भावतस्तु यथा गवयेन सत्यगवयप्रतिपत्तौ अन्य एव रेखागवय: अन्यश्च सत्यगवय: इतरथा धूलिप्रक्षेपमात्रमेवं प्रक्रियावाक्यमन्यदेव समासात्। प्रयोसमवायि किल वाक्यमनेनोपायेन प्रदर्श्यते। तच्च व्यपेक्षैकनियतमेकार्थीभाव- विषयात्समासादन्यदेव। एवं

वाक्ये दृष्टानां युक्तादीनां गोरथादिषु लोपाख्यानं शास्त्रैः न कृतम्। तदुक्तम्-

*असमासे समासे च गोरथादिष्वदर्शनात्।*
*युक्तादीनां न शास्त्रेण निबृत्त्याऽनुगमः कृतः।।*

असमासे वाक्ये समासे च दृष्टप्रयोगाः इति प्रक्रियायां तदभेदेन वृत्त्यनुशासने विभक्तीनां प्रसङ्गाद् वृत्तं यदाचार्योऽर्थाभावात् स्वाभाविकीं निवृत्ति प्रत्ययलक्षणां प्रार्थयमानोऽन्वाचक्षीत। गोरथो दधिघट इत्यादौ युक्तादयः प्रक्रियावाक्यगता न दृश्यन्ते। नापि तल्लोकलभ्यम्। अपि च गवां रथो गोरथ इति द्रव्याणां क्रियां विनाऽसामर्थ्यात् समासाभावे चोदिते सिद्धन्तु समानाधिकरणाधिकारे तृतीयापूर्वपदोत्तरपदलोपं च षष्ठीसमासश्च युक्तपूरणान्त इत्युक्ते दध्नोपसिक्तो दध्युपसिक्त ओदनो दध्योदनः, दध्नः पूर्णो दधिपूर्णो घटो दधिघटः, गोभिर्युक्तो गोयुक्तः, गोयुक्तो रथो गोरथः इत्येवं समासे उत्तरपदलोपस्य वचने च चोदिते न वा समासो दर्शनाद्युक्तार्थसम्प्रत्ययात् तदर्थाध्यवसानम इति प्रत्याख्यातं लोपवचनम्। अनेन एकार्थीभावकृतो विशेष उक्तः। नन्वेवमभाव इत्यत्र कथं नञ्समासः? नह्य उत्तरपदार्थ-सदृशार्थसम्प्रत्ययः किन्तु तन्निषेधः प्रतीयते। भावस्य उत्तरपदार्थस्य तस्य चासतः कथं भावशब्दविषयता इत्याशयेनाह-

*अभाव इति भावस्य प्रतिषेधे विवक्षिते।*
*स्वोपाख्यत्वमनाश्रित्य प्रतिषेधो न कल्पते।।*

प्रतिषेधविषयप्रक्लृप्त्यर्थमत्रापि बुद्ध्या निरूपितमाकारान्तरमवलम्ब्य भावशब्दप्रयोगात् तस्य श्रुतिसामान्यादसद्विषयतानवगमात् तदवगमाय नञ्प्रयोग उपपद्यते। निरुपाख्ये हि व्यामोहाद् भावतत्त्वसमारोपे तत्त्वाध्यवसायान्नञ्प्रयोगः। एवं वैतत् अथवा सर्वे इमे शब्दाः गुणसमुदाये वर्तन्ते इत्याशयेन हरिणा उक्तम्-

*अनेकधर्मवचनैः शब्दैः सङ्घाभिधायिभिः।*
*एकदेशेषु वर्तन्ते तुल्यरूपाः स्वभावतः।।*

जातिगुणक्रियालक्षणे धर्मोऽत्र गुणशब्देन भाष्ये विवक्ष्यते। तदुक्तम्-

*तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम्।*

यस्य परिपूर्णा धर्मजात्यादयः श्रुतादयश्च स मुख्यो ब्राह्मणः। तदभिधायी ब्राह्मणशब्दो रूढः। तेन तुल्यश्रुतिः अवयवे वर्तते। समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते। यथा तैलं भुक्तम्, घृतं भुक्तम्। यद्यपि सङ्घाभिधायी एकदेशाश्रयो ब्राह्मणशब्दप्रयोग इति तस्यैकदेशभिघायी च अर्थभेदात् स्वभावतोऽत्यन्तभिन्न एव शब्दः तथापि श्रुतिसाम्यादर्वाग्दर्शना भेदं नावगच्छन्ति इत्यभेदमाश्रित्य समुदायावयववृत्तित्वं कथ्यते। एवं च ब्राह्मणजातिहिते क्षत्रिये विद्याविनयलक्षणैकदेशाश्रयो ब्राह्मणशब्दप्रयोग इति तस्यैकदेशाप्रवृत्तिता श्रुतिसारूप्यादनवगता नञ्प्रयोगादवधार्यते। तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः। यो गुणहीनः स जाति मात्रेण ब्राह्मणः। इत्थं चात्र गुणसमुदायविषयत्वात् पूर्वोत्तरपदयोः सामानाधिकरण्यमुपपद्यते। अत्र हि नञा यस्यैव गुणस्य स्वाभाविकी निवृत्तिः सैव द्योत्यते। इत्यवशिष्टानां गुणानामर्थात् सद्भावोऽवगभ्यते। पूर्वमुपचारसत्ताश्रयेणोक्तम्। इदानीं

पारमार्थिकस्यैव कस्यचिद्धर्मस्य नञा निवर्तनेऽपि परिशिष्टमात्राकलापे समुदायाभ्यासेन शब्दप्रवृत्तिर्न निर्विषया इत्येदापख्यायते। न च ब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति इति कथनासङ्गतिः। राजपुरुषादिवत् पूर्वपदार्थोपहितविशेपस्य उत्तरपदार्थस्य प्रतीतेः। इत्याशयेनाह-

*पदार्थानुपघातेन दृश्यते च विशेषणम्।*

राजपुरुष इत्यादौ राजाद्यर्थः, पुरुषाद्यर्थश्च अनुच्छेदेन, विशेषोपसंहारात् युक्तं विशेषणम्। इह तु नञर्थः उत्तरपदार्थोच्छेदकः कथं विशेषणं स्यात्। अनर्थक एवात्र नञ्। तथा ब्राह्मणमात्रस्यानयनं स्यादिति भाष्यकाराशयः। अथवा न सर्वथा उत्तरपदार्थनिवृत्तिः। इत्याशयेनाह भर्तृहरिः-अथ जातिमतोऽर्थस्य कश्चिद्धर्मों निवर्तितः।

गुणसमुदाये जातेः प्रवृत्तिहेतुत्वात् तद्रूपः समुदायस्य प्रदेशमात्रस्य निवृत्तिर्नञा द्योत्यते। तदपरस्य तु प्रदेशस्य स्थितिरिति भवति। इति विशेषावसायः। यद्येवम् :-

*अवश्यं ब्राह्मणे कश्चित् क्वचिद्धर्मो न विद्यते।*
*विशेषावचनात्तत्र नञः श्रुतिरनर्थिका।। इति।*

नहि सर्वो ब्राह्मणः परिपूर्णागुणो लभ्यते इति ब्राह्मणशब्दः प्रदेशवृत्तिरेव सर्वः। पूर्णगुणेऽपि जातिमात्रसंस्पर्शेन प्रवृत्तेः। तथा च न नञ्प्रयोगेऽपि अनर्थको नञ्। किञ्च-

*अविशिष्टस्य पर्यायो नञ्विशिष्टः प्रसृज्यते।*
*अन्वाख्यानाद्धि साधुत्वमेव भूते प्रतीयते।।*

य एवार्थो ब्राह्मणशब्दस्य निवृत्तैकदेशः, स एवाब्राह्मणशब्दस्येति नञ्समासवचनेन प्रज्ञापितसाधुभावोब्राह्मणशब्दः ब्राह्मणशब्दस्य पर्यायः प्राप्नोतीति शङ्कां निराकर्तुमाह-

*पदार्थानुपघातेन यद्यप्यत्र विशेषणम्।*
*उपचारसतोऽर्थस्य साऽवस्था द्योत्यते नञा।।*

एकदेशोऽप्यत्र न मुख्यो ब्राह्मणसजातीयः बुद्ध्य तमुपचर्य तच्छब्दप्रयोगः। तथा चास्य स्वोपचरितलक्षणावस्था नञा प्रकाश्यते इति पदार्थानुपघतेनैव इदमपि विशेषणं युज्यते। भाष्ये उक्तम् निवृत्तपदार्थकः इति। तदेतत्स्पष्टीकृतं भर्तृहरिणा-

*निवृत्तेऽवयवस्तस्मिन् पदार्थे वर्तते कथम्*
*नानिमित्तादिशब्दस्य प्रवृत्तिरुपपद्यते।।*

बुद्धिपरिगृहीताकारोऽपि शब्दः प्रवर्तमानो बाह्यगतं बीजमवलम्बत एव। तथा च दृश्यविकलपयोरेकत्वाध्यवसायात् बाह्यमेव शब्दार्थं मन्यन्ते इति क्षत्रियादौ ब्राह्मणादेरेकदेशवाचित्वात् अवयवशब्दस्य कथमसति निमित्ते प्रवृत्तिः, येन साऽवस्था नञा द्योत्यते। इत्युच्यते-यदा स्वाभाविकी निवृत्तिरिति क्षत्रियेऽपि ब्राह्मणशब्दस्तदाऽऽराच्छब्दवदेकस्य विरुद्धेऽर्थे स्वभावतः शब्दस्य वृत्तिर्यद्यस्ति नञः श्रुतिरनार्थिका।। यथा दूरान्तिकार्थवृत्तिराराच्छब्दः तथा ब्राह्मणक्षत्रियवृत्तिः स्वभावतो ब्राह्मणशब्दो रुढः इत्यवगमे विनाऽपि नञ्प्रयोगं प्रकरणादिवशात् क्षत्रियावगतिः ब्राह्मणशब्दाद् भविष्यतीति नञ्प्रयोगो व्यर्थः। येन

नञ्समासोऽन्वाख्यायते। तदुक्तम् भाष्ये यदि स्वाभाविकी निवृत्तिः किं नञ् प्रयुज्यमानः करोति, अथ वाचनिकी तद् वक्तव्यम्, नञ् प्रयुज्यमानः पदार्थ निवर्तयति। एवं ह्येतद् व्याचष्टे भर्तृहरि :-

*अथ स्वभावो वचनादन्वाख्येयत्वमर्हति।*
*तद्वाच्यमप्रसिद्धत्वान्नञार्थो विनिवर्त्यते।।*

स्वभावोऽपि दुरवधारणत्वात् नञ् इत्यनेन शब्देन यदि ज्ञाप्यते तदा इदमपि वचनेन अन्वाख्येयम्, नञ्प्रयोगे पदानां प्रसिद्धोऽर्थो विनिवर्तते। अथास्यायं स्वभावः प्रयोगपारम्पर्यावसेयः तदा सर्वस्यैवं स्वविषये व्यापारे शब्दान्तरानपेक्षणात् उत्तरपदेनापि निवृत्त्यभिधाने नञ् नापेक्षितव्यः। एतदनन्तरं कीलप्रतिकीलवत् वाचनिकी निवृत्तिः। यद्येव नञो माहात्म्यं, न जातुचित् राजानो हस्त्यश्वं बिभृयुः इति दूषणं दत्त्वा स्वाभाविकी निवृत्तिः सिद्धान्तिता। तत्र च नञ्निमित्ता उपलब्धिः। यथा समन्धकारे द्रव्याणां प्रदीपनिमित्तं दर्शनम् इत्याश्योनोक्तम्-

*यद्यप्युभयवृत्तित्वं प्राधान्यं तु प्रतीयते।*
*प्रस्थानं गम्यते शुद्धे तदर्थो हि न तिष्ठतौ ।।*

गतिनिवृत्तिवचनस्तिष्ठतिः प्रसिद्धः। प्रशब्दप्रयोगं विनाऽपि उपसर्गः प्रस्थानार्थोऽपि तमर्थमवगमयितुमपर्याप्तो यथा, एवं क्षत्रियवचनोऽपि ब्राह्मणशब्दः नञमन्तरेण तदर्थनिश्चयाधायी। नहि प्रशब्दस्य प्रस्थानमर्थः। तिष्ठतेर्निरर्थकत्वप्रसङ्गात्, इत्यसौ तिष्ठत्यर्थः प्रशब्दस्तु द्योतकः। एवं नञ्शब्दोऽपि। नन्वेवं यदि क्षत्रिये मुख्यो ब्राह्मणार्थो नास्ति तदा किमर्थं सन्दिग्धार्थो ब्राह्मणशब्दः तत्र वाचकोऽभ्युपगम्यते, तस्य चायं मुख्योऽर्थो नञ्प्रयोगादवध र्यते। यदि पुनरयं निवृत्तपदार्थकः। किमर्थं ब्राह्मणशब्दः प्रयुज्यते इत्युक्तं भाष्ये। तदाह हरि :-

*किमर्थमतथाभूते सति मुख्यार्थसम्भवे।*
*भेदे ब्राह्मणशब्दस्य वृत्तिरभ्युपगम्यते।।*

अत्र परिहारभाष्यम्-यथा विज्ञायेत अस्य पदार्थो निवृत्त इति। कस्य पदार्थो निवृत्त इत्यसन्देहार्थ ब्राह्मणशब्दः प्रयुजयते। तदेवं व्याख्यातं हरिणा-

*अयं पदार्थ एतस्मिन क्षत्रियादौ न विद्यते।*
*इति तद्वचनः शब्द प्रत्ययाय प्रयुज्यते।।*

अज्ञानात् गुरूपदेशाद्वा। क्षत्रिये ब्राह्मणशब्दः प्रयुक्तः। स एवं बोध्यते नायं ब्राह्मणोऽब्रह्मणोऽयम्। क्षत्रिय इत्युक्ते ब्राह्मणार्थस्य तत्र निषेधो न कृतः स्यात्। इति विवक्षितोऽर्थो न प्रतीयते। तस्माद्बुद्ध्या तत्र ब्राह्मणशब्दमाश्रित्य नञो विषयप्रक्लृप्त्यै तदर्थनिवृत्तिः।

नैयायिकमीमांसकाः समासादिवृत्तौ जहत्स्वार्थावृत्तिं स्वीकुर्वन्ति। राजपुरुष इत्यादिसमासेऽवयवशक्तत्यैव निर्वाहे समुदाये शक्तिस्वीकारो व्यर्थ इत तेषां मतम्। अर्थात् वाक्यफोटो नैयायिकाद्यसम्मतः। पङ्कजपदे पद्मत्वेन रूपेण पद्मोपस्थितये तत्रैव समुदाये शक्तिः न च ऋद्धस्य राज्ञः पुरुष इत्यत्र राजपदार्थे यथा ऋद्धादेरन्वयापत्तिः; शाब्दिकनये समुदायशक्तिस्वीकारे राज्ञः पदार्थैकदेशत्वान्न तत्र ऋद्धादेरन्वयः, पदार्थः पदार्थेनान्वेति न

तु पदार्थैकदेशेनेति व्युत्पत्तः। एतादृशव्युत्पत्तिस्वीकारादेव घटत्वे नित्यान्वयतापत्त्रेण नित्यो घट इति न प्रयोगः, घटत्वस्य घटैकदेशत्वादिति वाच्यम्, सविशेषणनां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेति सिद्धान्तेन विशेषणान्वयाभावात् तार्किकमतेऽपि न दोषः। किञ्च राजपुरुष इत्यत्र राजपदस्य राजसम्बन्धिनि लक्षणा, आकांक्षावशात् राजसम्बन्ध्यभिन्नः पुरुष इति बोधः। एवञ्च राज्ञः पदार्थैकदेशत्वात् पदार्थः पदार्थेनान्वेति इति व्युत्पत्त्या राज्ञि न ऋद्धादेरन्वयः। न चैकार्थीभावविवक्षायाम् समासस्य व्यपेक्षाविवक्षायाम् वाक्यस्य च राजपुरुषः, राज्ञः पुरुष इति प्रयोगद्वयोपपत्तौ विभाषेति सूत्रं वैयाकरणमते फलितार्थकथनम्, तार्किकमते प्रयोग द्वयसिद्धयर्थं वचनरूपेण कर्त्तव्यं भवतीति गौरवमिति वाच्यम्, तार्किकमतेऽपि लक्षणया राजसम्बन्ध्यभिन्नः पुरुष इति बोधेच्छायाम् समासस्य, राजसम्न्धवानिति बोधेच्छायां वाक्यस्य च प्रयोगद्वयोपपत्तौ विभाषेति सूत्रं फलितार्थकथनमिति गौरवाभावत्। तार्किकमते चित्रगुर्देवदत्त इत्यादौ स्वामित्वेनोपस्थितये समुदाये शक्तिकल्पनस्यावश्यकत्वम्। न च लक्षणया स्वामित्वेन उपस्थितिर्भविष्यतीति वाच्यम्, पङ्कजपदेऽपि लक्षणयैव पद्मह्योपस्थितिसम्भवात् समुदायशक्त्यसिद्ध्यापत्तेः। एवं वर्षासु रथकारोऽग्निमादधीत, रथकारस्तु मा हि स्यात्करण्यां यस्य सम्भवः इति स्मृतिसङ्केतितान्त्यजाविशेषस्य वेदाधिकारित्वाभावात् कथमग्न्याधानमित्याशङ्क्य श्रुत्यन्यथानुपपत्त्या जातिविशेषस्याधिकारित्वं प्रकल्प्य तावन्मात्रवेदाध्ययनकल्पनमयुक्तं स्यात्। तार्किकमते रथं करोतीति क्लृप्तयोगेन ब्राह्मणादिविषयतयैव श्रुत्युपपत्तेः। किञ्च भाष्येऽपि व्यपेक्षापक्ष एकार्थीभावपक्षश्चेति पक्षद्व र्निदिष्टम्। तत्राजहत्स्वार्थापदेन व्यपेक्षापक्ष एकार्थीभावपदेन जहत्स्वार्थापक्षः इति समर्थः पदविधिरिति ,सूत्रे उक्तम्। अथैतस्मिन्व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इति नैयायिकमते दूषणमप्युक्तम्। एवं धवखदिरौ, निष्कौशाम्बिः, गोरथः, घृतघटः, गुडधानाः, केशचूडः, सुवर्णालङ्कारः, द्विदशाः, सप्तपर्ण इत्यादौ इतरेतरयोग, अतिक्रान्त, युक्त, पूर्णा, मिश्र, सङ्घात, विकार, सुप्प्रत्ययलोपवीप्साद्यर्थो वाचनिको वाच्यः इति तार्किकमतेऽतिगौरवं भवति। एवं घनश्यामः, हंसगमन इत्यादिविवार्थे समास इवशब्दलोपश्च वक्तव्य इत्यपि गौरवम्। वैयाकरणनये समुदाये शक्तिस्वीकारान्नोक्तदोषः। तदुक्तम्–

*चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्।*
*कर्तव्यन्ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः।।*

*समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।*

*बहूनां वृत्तिधर्माणां वचनैरेव साधने।*
*स्यान्महद गौरवं तस्मादेकार्थीभाव आश्रितः।।*

एवम् ऊढरथ इत्यत्र रथकर्मकवहनकर्ता, उपहृतपशुरित्यत्र पशुकर्मकोपहरणोद्देश्यः, उद्धृतौदनेत्यत्र ओदनकर्मकोद्धरणावधिः, बहुपाचिकेत्यत्र बहुपाककर्त्रधिकरणमिति बोधस्तार्किकमते न स्यात्। शाब्दिकनये समुदायशक्त्यैव घटत्वविशिष्टे घटपद इव तादृशबेधसम्भवान्न गौरवम्। किञ्च प्राप्तोदको ग्राम इत्यत्रोदककर्तृकप्राप्तिकर्माभिन्नो ग्राम इति बोध न स्यात्। शाब्दिकनये समुदायशक्त्यैव घटत्वविशिष्टे· घटपद इव तादृशबोध समीावान्न गौरवम्। तार्किकमते प्राप्तिकर्त्रभिन्नम् उदकम् इत्येव बोधो न स्यात्। तार्किकमते

प्राप्तिकर्त्रभिन्नम् उदकम् इत्येव बोधः स्यात्। न च घनश्यामः, निष्कौशम्बिरित्यादौ निरादीनां द्योतकतया कौशाम्ब्यादिपदस्यैव कौशाम्ब्यवधिकनिष्क्रमणकर्त्राद्यर्थे लक्षणस्वीकारात् न क्रान्तादिशब्दानामुपादानं नैयायिकमतेऽपि। एवं पङ्कजपदे समुदायशक्तिस्वीकारस्यावश्यकत्वम्। अवयवशक्तिमजानतोऽपि जनस्य समुदायाद् बोधदर्शनात्। चित्रगुरित्यादौ उक्तशब्दे एव लक्षणा। प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेः। प्रप्तोदक इत्यत्रापि उदकपदे एव उदककर्तृकप्राप्तिकर्मणि लक्षणा। पूर्वपदं तात्पर्यग्राहकम्। प्राप्तपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बिततत्वेन शीघ्रोपस्थितिकत्वमुत्तरपदलक्षणायां विनिगमकम्। घटादिपदे विशिष्टे एव शक्तिः। विशिष्टस्यैवेश्वरसङ्केतित्वात्। सत्यम्। समासे समुदाये शक्त्यस्वीकारे अर्थवत्सूत्रेण समासस्य प्रातिपदिकसंज्ञा न स्यात्। अर्थवत्पदेन शक्तिमत्त्वस्यैव ग्रहणात्। न च कृतत्तद्धितसमासाश्चेति सूत्रे समासग्रहणात्समासस्य प्रातिपदिकसंज्ञा भविष्यतीति वाच्यम्, समासग्रहणस्य नियमार्थत्वमर्थवत्सूत्रे भाष्ये उक्तम्। पूर्वसूत्रेणा प्रातिपदिकत्वे सिद्धे सति समासग्रहणस्य नियमार्थत्वं नान्यथा। सिद्धे (सति) विधिरारभ्यमाणो नियमाय भवतीति सिद्धान्तात्। न च लाक्षणिकार्थवत्त्वमादाय प्रातिपदिकसंज्ञा भविष्यतीति वाच्यम्, समासवाक्ये शक्त्यभावे शक्यसम्बन्धरूपलक्षणया असम्भवात्। न च तिप्तस्झि इत्यारभ्य ङ्योःसुप् इति तिप् प्रत्याहारो भाष्यसिद्धः, तथा च अर्थवत् कृत्तद्धितेति सूत्रे द्वयेऽतिप् प्रातिपदिकमिति सूत्रं क्रियताम्, तदनन्तरं समासश्चेति। सुबन्ततिङन्ततदादिभिन्नं प्रातिपदिकमित्यर्थाद् राजन् ङस पुरुष सु इति समुदायस्य सुबन्ततदादिभिन्नत्वेन प्रातिपदिकत्वं भविष्यति, समासग्रहणं च नियमार्थम्, तेन च राज्ञः पुरुष इति वाक्यस्य प्रातिपदिकसंज्ञा न भविष्यतीति नैयायिकमते न दोष इति वाच्यम्, ध नं वनमित्यादौ प्रत्येकं वर्णोऽपि सुबन्ततदादिभिन्नत्वेन प्रातिपदिकसंज्ञावारणाय सुबन्ततिङन्तदादिभिन्नमर्थवत्प्रातिपदिकमित्यर्थस्यावश्यकत्वेन समासेऽर्थवत्त्वाभावेन प्रातिपदिकत्वानुपपत्तेः। किञ्च चित्रगुमानय इतयादौ गोपदार्थे नैयायिकरीत्या कर्मादिरन्वयो न स्यात्, प्रत्ययानां प्रकृत्यर्थान्वितस्यार्थबोधजनकत्वव्युत्पत्तेः। अम्विभक्तेः प्रकृतिः चित्रगुसमुदायः। तस्य न्यायनये निरर्थकत्वात्। न च प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमिति-व्युत्पत्तिस्वीकाराच्चित्रगुमित्यादौ न दोष इति वाच्यम्, उपकुम्भं गच्छ, अर्धपिप्पलीमानय इत्यादौ कुम्भसमीपे पिपलिसम्बन्ध्यर्थे पूर्वपदार्थे विभक्त्यर्थावयेन एतादृशव्युत्पत्तर्व्यकभचारात्। न च प्रकृतित्वाश्रयविभक्त्यर्थान्वय इति स्वीकारान्नैयायिकमते प्रकृतित्वस्य गोशब्देऽपि सत्त्वात् नोक्तदोष इति वाच्यम्, एतादृशव्युत्पत्तिस्वीकारे पङ्कजमानय, दण्डिनं पश्य, शूलिनं पूजय इत्यादौ पङ्कदण्डशूलेषु आनयनदर्शनपूजनादेरन्वयापत्तेः। पङ्कादावपि प्रकृतित्वस्य सत्त्वात्। अघटमानयेत्यादौ घटेऽपि आनयनान्वयापत्तेश्च। न च प्रत्ययप्राग्वर्तिपदजन्योपस्थिति-विशेष्यत्वं प्रकृत्यर्थत्वम् इति स्वीकारात्पङ्कजमानयेत्यादौ पङ्कादौ नानयनान्वयापत्तिरिति वाच्यम्, गामानयति कृष्णो दण्डेन इत्यत्र कृष्णे तृतीयार्थान्वयप्रसङ्गात्। कृष्णस्यापि प्रत्ययप्राग्वर्तित्वात्। न च समासस्थले समस्यमानपदार्थगतस्वार्थबोधकत्वं समासोत्तरविभक्तेः इति स्वीकारान्नोक्तदोष इति वाच्यम्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तित्यागापेक्षया समासे समुदाये शक्तिस्वीकारस्यैवावश्यकत्वत्। किञ्च समासे समुदाये

शक्त्यस्वीकारे तण्डुलः पचतीत्यादौ तण्डुलस्य कर्मत्वादिसंसर्गेण पाकादावन्वयतात्पर्येण तण्डुलः पचतीति प्रयोगस्य प्रामाण्यापत्तिः। तद्वारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेः हेतुत्वमावश्यकम्। एवञ्च राजपुरुषः चित्रगुः निलोत्पलम्, इत्यादौ राजपदार्थस्य पुरुषपदार्थे, चित्रपदार्थस्य गोपदार्थे, नीलपदार्थस्य उत्पलपदार्थे चान्वयो न स्यात्। उत्पलादेर्विभक्तिजन्योपस्थितित्वाभावात्। किञ्च राजपुरुष इत्यादौ राजपदस्य राजसम्बन्धिनि लक्षणास्वीकारे राज्ञः पुरुष इति विवरणविरोधः। समाससमानार्थकवाक्यस्यैव विग्रहत्वात। राजपदस्य राजसम्बन्धे लक्षणास्वीकारे राजसम्बन्धरूपः पुरुष इति बोध ापत्तिः। विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वय इति सिद्धान्तात्। तस्मात्समासे समुदाये शक्तिः स्वीकार्या। अत एव वषट्कर्तुः प्रथमभक्ष इत्यत्र समासे उद्देश्यविधेयभावेन प्रतीतिर्न भवति। भक्षमुद्दिश्य प्राथम्यविधाने तु एकप्रसरताभङ्गापत्तिः। एवं त्र्यङ्गैः स्विष्टकृतं यजति इत्यत्र अङ्गमुद्दिश्य त्रित्वविधाने एकप्रसरताभङ्गापत्तिः दशमाध्यायस्य तृतीये पादे मीमांसकैरुक्तम्। तथा च मीमांसकैरपि समुदाये शक्तिः स्वीकृताः। अत एवारुणाधिकरणारम्भः सङ्गच्छते। अरुणया एकहान्या पिङ्गक्ष्या सोम क्रीणातीति वाक्येरुणस्य अमूर्तत्वेन गुणत्वात् क्रीणातिं प्रति करणत्वासम्भवात्कथं। तृतीयेति सन्दिह्य पिङ्गक्ष्यादिद्रव्यद्वारा क्रियान्वय इति मीमांसकसिद्धान्तासङ्गतिश्च स्यात्। अरुणपदवत् एकहायन्या पिङ्गाक्ष्या इत्यनयोरपि एकाब्द त्वादिगुणमात्रवाचकत्वेनामूर्तत्वात् क्रीणातौ करणत्वासम्भवः। समासे समुदाये शक्तिस्वीकारे तु एकहायन्यादेः द्रव्यत्वेन तत्रान्वयसम्भव इति मीमासंकोक्तिः सङ्गच्छते। नैयायिकमतेऽपि पङ्कजपदे समुदाये शक्तिः राजपुरुष इत्यादौ न, इति अर्धंजरतीयत्वमनुचितम्। वर्षासु रथकारोऽग्निमादधीत इत्यत्रपूर्वविद्याध्ययनकल्पना व्यर्था। समासे प्रातिपदिकत्वान-पपत्तिश्चित्रगुरित्यादौ गोपदे लक्षणा स्वीकार्या, ऊढरथ इतयादौ रथकर्मकवहनकर्तृत्यर्थानुपपत्तिः। तस्मात् समुदाये शक्ति स्वीकार्या। नागेशमतेऽवयवशक्तिसहकृतसमुदाय शक्तिः। जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी, यत्रावयवार्थः, समुदायार्थविरुद्धस्तत्रैव जहत्स्वार्था वृत्तिः। यथा कृष्णसर्पः। अन्यत्र तु अजहत्स्वार्था वृत्तिरेव भाष्येऽप्युक्तम् भिक्षुको द्वितीयां भिक्षामादाय प्रथमां न जहाति। एवञ्च भट्टोजिदीक्षितमते यथा वृषभपदे वृषादीनां निरर्थकत्वं तथा समासेऽवयवानां निरर्थकत्वम्। कौण्डभट्टेनाऽपि अवयवानां निरर्थकत्वं स्वीकृतम्। नागोजीभट्टमते समुदायार्थावयवार्थयोर्यत्र विरोधस्तत्रैव जहत्स्वार्था वृत्तिर्न सर्वत्रेति निष्कर्ष इत्योम्।

# धात्वर्थविचार:

धात्वर्थविषये सन्ति नानादर्शनेषु नाना मतानि। नैयायिका मीमासंका वैयाकरणाश्चात्र भूयो बिवदन्ते। तत्र प्रथमं नैयायिकानां तत्रापि प्राचीननैयायिकानां मतमुपस्थाप्यते। तेषां मते व्यापारमात्रं धात्वर्थ:, फलं द्वितीयार्थ:। तेन च ग्रामं गच्छतीतिवत् ग्रामं स्पन्दते इति न प्रयोग:। द्वितीयादे: गम्याद्युपस्थापितस्पन्दादावेव फलान्वयबोधकत्वात्। न तु स्पन्दप्रभृत्युपस्थापिते, तस्मिन् द्वितीयादिना फलान्वयबोधजननासम्भवात्। नहि येन केनचिदुपस्थापितयोरर्थयो: परस्परमन्वय: प्रतीयते। तथा सति घटकर्मत्वादिपदोपस्थपितयोरपि घटकर्मत्वाद्यो: घट: कर्मत्वमानयनं कृतिरित्यादौ परस्परमन्वयबोधप्रसङ्गात्। क्रियादिसमानार्थकधातूपस्थाप्यफले विषयितार्थकद्वियार्थान्वयसम्भवेन घटं करोतीतिवद् घटं यतते इत्यादिप्रयोगप्रसङ्गाच्च। तथा च ययोर्यादृशान्वयबोधे आकांक्षा, तदुपस्थापितयोरेव तादृशान्वयबोध:। आकांक्षा च द्वितीयादेर्गम्यादिना क्रियादिना च कल्पते, न तु तत्समानार्थकेनापि स्पन्दिप्रभृतिना। अत एव ग्रामं स्पन्दत इत्यादयो न प्रयोगा:। न च व्यापारमात्रस्य घात्वर्थत्वे सर्वेषां धातूनां सकर्मकत्वाकर्मकत्वव्यवहारापत्ति:, व्यापारवाचकत्वं सकर्मकत्वमिति स्वीकारे सर्वेषां सकर्मकतापत्ति:, व्यापारवाचकत्वमकर्मकत्वमिति स्वीकारे सर्वेषामकर्मकतापत्तिरिति वाच्यम्, फलान्वितव्यापारबोधकधातुत्वस्यैव सकर्मकत्वात्। फलानन्वितव्यापारबोधकधातुत्वस्याकर्मकत्वात्। न च धातोर्व्यापारमात्रावाचकत्वे त्यजति, गच्छति, त्यागो, गमनमित्यादि-वाक्याद्विलक्षणाबोधानुपपत्ति:। न हि शक्तिभ्रमाद्यजन्मनो: तादृशवाक्यजन्यबोधयो: कश्चिद् वैलक्षण्यमभ्युपैति। एवं च त्यागादितात्पर्येण त्यागगमनादिपदं व्युत्पन्ना अपि प्रयुञ्जीरन्। न च त्यज्धातोर्गम्धातोश्च फलविशेषावच्छिन्नव्यापारे लक्षणास्वीकारे विलक्षणबोधोपपतिरिति वाच्यम्। लक्षणया विलक्षणबोधजननेऽपि शक्त्याऽविलक्षणबोधजननसम्भवेन त्यागादितात्पर्येण गच्छतीत्यपि प्रयोगापत्ते:। सत्यम्। कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते। न तु केवलव्यापारे। अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकम्, इति न. त्यागादितात्पर्येण गमनादिप्रयोग:। एवं त्यजिगमिप्रभृतिसमभिव्याहृतकर्मप्रत्ययस्य फलविशेषे एव नियतं तादृशं तात्पर्यम् इति न विभागादितात्पर्येण ग्राम गच्छतीत्यादिप्रयोग:। नव्यतार्किकमते संयोगादिरूपफलविशेषा-वच्छिन्नव्यापारो गम्याद्यर्थ:, तत्तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वम् इति प्रयोगात् काशीं गच्छतीत्यादौ न प्रयागस्य कर्मत्वम् विभागस्य गम्धात्वर्थतावच्छेदकत्वाभावात्। एवं स्पन्दे: न सकर्मत्वव्यवहार:। तत्र फलस्य धात्वर्थतानवच्छेदकत्वात्। एवञ्च धातुत एव फलविशेषलाभात् 'अनन्यलभ्यो हि शब्दार्थ' इति नयेन वृत्तिरेव द्वितीयार्थ:। न च

'कर्मणि द्वितीया' इति पणिनीयसूत्रविरोध:, नव्यतार्किमते द्वितीयार्थस्य वृत्तित्वादिति वाच्यम्, कर्मणि फलनिष्ठाधेयत्वान्वयिनि प्रकृतितात्पर्ये तदुत्तरं द्वितीयेति कर्मणि द्वितीयेति सूत्रस्यार्थ:। न च फलावच्छिन्नव्यापारे धातो: शक्तिस्वीकारे फलस्य पदार्थैकदेशत्वेन तत्र द्वितीयार्थवृत्ते: कथमन्वय:, 'पदार्थ: पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति सिद्धान्तादिति वाच्यम्, द्वितीयार्थवृत्तित्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति धातुजन्यफलोपस्थिति: कारणम् इति व्युत्पत्तिवैचित्र्येण प्रकृतेरेकदेशान्वयस्वीकारात्। न चैवं स्पन्दप्रतियोगिकभेदस्य व्यापारेऽन्वयाबाधेऽपि फलेऽन्वयतात्पर्येण गमनं न स्पन्द: इति प्रयोगापत्ति:, तद्वारणाय फलविशेष्यकान्वयबोध प्रति फलविशेष्यकवृत्तिज्ञानजन्यफलोपस्थितेर्हेतुत्वेन धात्वर्थतावच्छेदकफले कथं द्वितीयार्थवृत्तित्वान्वय इति वाच्यम्, संयोगविशेष्यकगम्धातुनिष्ठवृत्तिज्ञानजन्यसंयोगविशेष्यकोपस्थित्यव्यवहितोत्तरजायमानसंयोगविशेष्यकस्पन्दप्रतियोगिकभेदप्रकारकशाब्दबोध प्रति विशेष्यतासम्बन्धेन गम्धातुनिष्ठवृत्तिज्ञानाधीनसंयोगविशेष्यकोपस्थिति: कारणम् इति कार्यकारणभावस्वीकारात् गमनं न स्पन्द इत्यादयो न प्रयोगा:। न च समानविषयकानुमितिं प्रति शब्दसामग्र्या: प्रतिबन्धकत्वम्, नव्यतार्किकमते ग्रामं गच्छतीत्यादिवाक्यज्ञानघटितशाब्दसामग्र्या: समानविषयकानुमितिं प्रति फलप्रकारतानिरूपितव्यापारविशेष्यताशालित्वेन, अथवा व्यापारविशेष्यतानिरूपितफलप्रकारताशालित्वेन प्रतिबन्धकत्वकल्पने गौरवम्। प्राचीनतार्किकमते समानविषयकानुमितिं प्रति द्वितीयाजन्यफलोपस्थिते: प्रतिबन्धकत्वे लाघवं भवति। न च प्राचीनमते फलरूपद्वितीयार्थत्वे 'भूमिं गच्छति न महीरुहम्' इत्यादौ जनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकमहीरुहनिष्ठसंयोगाभावविशिष्टव्यापारानुकूलकृतिमान् देवदत्त इति बोधो न स्यात्। जनकत्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताऽभावाप्रसिद्धे:। नव्यमते आश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकमहीरुहनिरूपितवृत्तित्वाभावविशिष्ट- संयोगानुकूलव्यापारनुकूलकृतिमान् देवदत्त इति बोधस्वीकारे न दोष:। न च भूमिकर्मकगमनकर्त्रादौ महीरुहकर्मकगमनकर्तृत्वाभाव: प्रतीयते इति वाच्यम्, कर्तृवाचकपदासमभिव्याहारस्थले तादृशबोधासम्भवात्। न च तत्रापि आख्यातार्थन्वयबोधानुरोधेन कर्तृवाचकपदाध्याहारस्य आवश्यकतया अध्याहृतपदोपस्थाप्यकर्तर्येव तादृशाभावो नञा बोध इष्यते इति वाच्यम्, आख्यातार्थविशेष्यकस्यापि अन्वयबोधस्य सम्भवेनाध्याहारस्यानावश्यकत्त्वात्। भूमेर्गामनं न महीरुहस्य इत्यत्र आख्यातवाचकपदाभावात् भूमिनिष्ठसंयोगजनक: जनकत्वसम्बन्धवच्छिन्नप्रतियोगिताकमहीरुहनिष्ठसंयोगाभावविशिष्टव्यापारानुकूलकृतिमान् इति बोधे जनकत्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिता- काभावाप्रसिद्धि:। नहि तत्र आश्रयतासम्बन्धावच्छिन्नप्रतियोगितागमनाभाव: प्रतीयते इति वक्तुं शक्यम्। अनुयोग्यनुपस्थिते: नञोऽनुयोगिविनिर्मोकेनाभावबोधकताया अव्युत्पन्नत्वात्। एवञ्च प्राचीनतार्किकमते व्यापारमात्रं धात्वर्थ:, फलं द्वितीयार्थ:, कृतिस्तिङर्थ:। नव्यतार्किकमते फलव्यापारौ धात्वर्थौ, कृतिस्तिङर्थ:, धात्वर्थव्यापारन्तिङर्थे विशेषणम्। तिङर्थस्तु प्रथमान्तार्थे। तथा च देवदत्त: पचतीतिवाक्यात् विक्लित्त्यनुकूलव्यापारानुकूलकृतिमान् देवदत्त इति

प्रथमान्तार्थमुख्यविशेष्यको बोध इति नैयायिकमतम्। तत्र वैयाकरणा दोषमुद्भावयन्ति। तेषां दृष्ट्या नेदं मतं समीचीनं भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि इति निरुक्तात्। तिङन्ते व्यापारविशेष्यकबोधस्यैवौचित्यात्। अत एव युवादिसूत्रे पचति भवतीत्यत्र क्रियाविशेष्यकबोधो भाष्ये दर्शितः। तथाहि का तर्हीयं वाचोयुक्तिः पचति, भवति, त्वं पचसि, भवसि, पक्ष्यति, भवतीति, सैषा वाचोयुक्तिः, पचादिक्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति। पचाद्यर्थः क्रियाकर्तृकं भवनमिति क्रियाविशेष्यको बोधः। किञ्च कृतेस्तिङर्थत्वे देवदत्तः पचतीत्यादौ तिङा कर्तुरनभिधानात् तृतीयापत्तिः। न च अनभिहिते इत्यस्य अनभिहितसङ्ख्याके इत्यर्थात् न दोष इति वाच्यम्, देवदत्तः पवतेत्यादौ कृता सङ्ख्याया अनभिहितत्वेन तत्र तृतीयापत्तिः। किञ्च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः सकर्मभेदान्वयात् प्रथमान्तस्य प्राधान्ये पश्य मृगो धावतीत्यत्र भाष्यसिद्धैकवाक्यत्वानुपपत्तिः। धावनानुकूलकृत्तिमान् मृगः; दर्शनाश्रयस्त्वम् इति नैयायिकते बाधात्। तथा च एकमुख्यविशेष्य-कबोधजनकस्वरूपैकवाक्यत्वाभावत् भाष्यविरोधो दुर्वारः। न च धावनानुकूलकृतिमन्मृग-कर्मकदर्शनाश्रयत्वमिति बोधस्वीकारान्नेह भाष्याविरोध इति वाच्यम् मृगस्य दृशिक्रियां प्रति कर्मत्वापत्तौ द्वितीयापत्तिः। अप्रथमासामानाधिकरण्ये शत्रादिविधानेन च धावन्तं मृगं पश्येति प्रयोगापत्तिः। न च धावनक्रियाविशिष्टमृगस्यं कर्मत्वेऽपि केवलमृगशब्दस्य कर्मत्वाभावत् न द्वितीयापत्तिः। अत एव 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः' इत्यत्र उत्पत्ति-विशिष्ट शुभस्य अकर्मत्वेऽपि केवलस्य कर्मत्वाभावात् न द्वितीया इति सप्तशतीश्लोकः सङ्गच्छते। एवं 'जनामि सीता जनकप्रसूता' इत्यत्र ज्ञाधात्वर्थं प्रति जनकप्रसूतविशिष्टसीतायाः कर्मत्वेऽपि केवलसीतायाः कर्मत्वाभवान्न द्वितीया। सत्यम्। नीलगुणविशिष्टघटादेः कर्मत्वविवक्षायां नील घटमानयेत्यादौ द्वितीयानापत्तेः। इष्टापत्तिस्तु कर्तुमशक्या। अनभिहिते इति सूत्रस्थभाष्यविरोधात्। तथा हि 'अभिधान च प्रायेण तिङ्कृत्तद्धितसमासैः' इति परिगणनाभावे भीष्मगुणविशिष्टस्य कर्मत्वविक्षायां कटशब्दादुत्पन्नद्वितीयया कर्मत्वस्य उक्त्या भीष्मशब्दात् द्वितीया न स्यात्। अतः परिगणनं कर्त्तव्यम् इत्युक्तं भाष्ये। नैयायिकरीत्या विशिष्टस्य कर्मत्वे प्रत्येकं कर्मत्वाभावे भीष्मं कटं कुरु इति भाष्यासङ्गतिः। तस्मात् विशिष्टः प्रत्येकं च कर्म। तथा च मृगकर्मदर्शनाश्रयत्वम् इति बोधे द्वितीयापत्तिर्दुर्वारा। न च 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभा' इति सप्तशतीश्लोकासङ्गतिरिति वाच्यम्, तस्य आर्षत्वेनादोषात्। न च पश्येत्यत्र तमिति कर्माध्याहार्यम्, मृगो धावति तं पश्य एवमपि वाक्यभेदापत्तिः। किञ्च उत्कटधावनक्रियाविशेषत्यैव दर्शनकर्मतयान्वयस्य प्रतिपिपादयिषितत्वात् तंशब्दाध्याहारेऽनन्वयापत्तिः। एवञ्च भावनाप्रकारकबोधे प्रथमान्तप-दजन्योपस्थितिः कारणमिति नैयायिकोक्तं न युक्तम्। किन्तु आख्यातार्थकर्तृप्रकारकबोध प्रति धातुजन्यभावनोपस्थितिर्हेतुरिति कार्यकारणभावो मन्तव्यः। पचति भवतीत्याद्यर्थं भावनाप्रकारकबोधं प्रति धातुजन्यभावनोपस्थितिरपि हेतुः। किञ्च नैयायिकमते आख्यातार्थ-सङ्ख्यायाः प्रथमान्तार्थे एवान्वयात् आख्यातार्थसङ्ख्याप्रकारबोध प्रति प्रथमान्तपदजन्योप-स्थितिर्हेतुरिति कार्यकारणभावः तेन स्वीकर्तव्यः। एवञ्च चन्द्र इव मुखं दृश्यते। देवदत्तो

भुक्त्वा व्रजतीत्यादौ चन्द्रे क्तवार्थे च आख्यातार्थसङ्ख्यान्वयापत्तिः तयोरपि प्रथमान्तपदत्वात्। तद्वारणाय आख्यातार्थसङ्ख्याप्रकारबोध प्रति इतराविशेषणत्वघटितप्रथमान्तपदजन्योपस्थितिः कारणमिति कार्यकारणभावस्वीकारे गौरवम्। मीमांसकमते फलमात्रं धात्वर्थः। व्यापारो हि तिङर्थः। 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यम्' इति व्युत्पत्तिबलात् व्यापारविशेष्यको बोधः। कर्तरि कृदिति सूत्रात् लः कर्मणीति सूत्रे चकारात् कर्तरीत्यनुकृष्यते। सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वपरे। एवञ्च प्रकृतिजन्यबोधे प्रकारीभूतो भावप्रत्ययार्थ इति सिद्धान्तात् कर्तृत्वं व्यापारः च फलम्। फलव्यापारे च लकारा भवन्ति इति लः कर्मणीति सूत्रस्यार्थः। तथा च सूत्रमपि न विरुद्धदम्। एतन्मते कर्त्ता आक्षेपलभ्यः इति मीमांसकमतम्। तन्न युक्तम्। 'व्यापारो भावना सैवोत्पादना सैव च क्रिया। कृञोऽकर्मकतापत्तेर्नहि यत्नोऽथेः इष्यते' इत्युक्तेः। पचति पाकमुत्पादयति, पाकानुकूला भावना, तादृशी उत्पादना इति विवरणदर्शनात् विक्रियमाणस्य धातोरेवे व्यापारवाचकत्वम्। किञ्च भावनाया धात्वर्थाभिभावे घटं भावयतीत्यत्रेव घटो भवतीत्यत्र घटपदाद् द्वितीयापत्तिः। उत्पत्तिरूपफलाश्रयत्वेन कर्मत्वात्। न च कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम्, कृत्याश्रयत्वं कर्तृत्वम्, कारकचक्रप्रयोक्तृत्वं च कर्तृत्वम् इति कर्तृत्वलक्षणस्वीकारेऽचेतने तद्बाधेन घटादौ कर्तृत्वाभावात्। धात्वर्थानुकूल-व्यापाराश्रयत्वं कर्तृत्वमिति स्वीकारे सर्वस्यापि कारकस्य धात्वर्थानुकूलयत्किञ्चित्क्रियाश्रयत्वात् सर्वेषां कारकाणां कर्तृत्वापत्तिः। तेन क्रियाजनकत्वस्यैव कारकत्वात्। किञ्च व्यापारस्य धात्वावाच्यत्वे सकर्मकत्वाकर्मकत्वव्यवहारनुपपत्तिः। तथा हि धात्वर्थफलव्यधि-करणव्यापारवाचकत्वं धात्वर्थव्यापारव्यधिकरणाफलवाचकत्वं वाऽकर्मकत्वमिति सकर्मकत्वानुपपत्तिः। फलमात्रस्य धात्वर्थत्वात्। तथा धात्वर्थफलसमानाधिकरणव्यापार-वाचकत्वं, धात्वर्थव्यापारसमानाधिकरणफलवाचकत्वं वाऽकर्मकत्वमिति व्यवहारोच्छेदापत्तिः, धातोर्व्यापारवाचित्वाभावात्। न च पच्यादि धातूनशृङ्गग्राहिकयोपादाय तावद्भिन्नभिन्नत्वं सकर्मकत्वमिति स्वीकारान्न दोष इति वाच्यम्, जिधातोरभिभवार्थे, अकर्मकत्वस्य न्यूनीकरणार्थे सकर्मकत्वस्य अभ्युपगमात् सकर्मकधातुलक्षणे तत्प्रदेशेऽकर्मके तस्मिन्नतिव्याप्तिः। अप्रवेशे च न्यूनीकरणेऽर्थेऽव्याप्तिः। किञ्च व्यापारस्य धात्वर्थत्वाभावे फलमात्र धात्वर्थः स्यात्। तथा च करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यम्। एवं च यती प्रयत्ने इतिवत् फलस्थानीययत्नवाचकत्वाविशेषात् अकर्मतापत्तिः। न च मीमांसकमते 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमितिन्यायबलात् 'तदागमे हि दृश्यते' इति न्यायानुरोधाच्च तिङ्वाच्यैव भावना न धातोः। स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफल्वाचकत्वं सकर्मकत्वं धातुयुक्ताख्या-तार्थव्यापारसमानाधिकारणफलवाचकत्वमकर्मकत्वम्। आख्यातार्थव्यापाराश्रयत्व च कर्तृत्वम् इति न पूर्वोक्तापत्तिः, इति मीमांसकं प्रत्युच्यते-

*तस्मात करोतिर्धातोः स्यात् व्याख्यानं न त्वसौ तिङाम्।*
*पक्ववान् कृतवान् पाकं किं कृतं पक्वमित्यपि।।*

अयमाशयः। फलमात्रस्य धात्वर्थत्वस्वीकारे ग्रामः संयोगवान् इतिवत् ग्रामो गमनवान् इति प्रयोगापत्तिः संयोगाश्रयत्वात्। फलानुत्पाददशायां व्यापारस्य विद्यमानत्वेऽपि पाको

भवतीति प्रयोगानुपपत्तिः। मीमांसकमते कालस्य फल एवान्वयात्। तदानीं फलस्यासत्त्वात्। व्यापारविगमे फलसत्त्वे पाको विद्यते इत्यापत्तिश्च। विक्लित्तेर्वर्तमानत्वात्। न च भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वस्वीकारान्न दोष इति वाच्यम्। कर्त्राख्यातवत् कर्तरि कृदित्यत एव तद्विधानलाभे भाव इति सूत्रवैयर्थ्यापित्तेः। न च पचतीत्यस्य पाकं करोतीति विवरणदर्शनात् व्यापारो धात्वर्थ इति वाच्यम्, करोतिर्धातोरेव व्याख्यानम्, न तिङाम्। किञ्च, व्यापारस्य तिङर्थत्वे पक्ववान् इत्यादावन्वयानुपपत्तिः। तथा हि प्रकृत्यर्थप्रकारबोधं प्रति तदुत्तरप्रत्ययजन्या-पस्थितिर्हेतुरिति कार्यकारणभावमूलकः 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थः प्रधानमिति न्यायः। अयं न्यायः तिङन्तातिरिक्तस्थले प्रवर्तते। न तु तिङन्ते। भावप्रधानमाख्यातमिति यास्कवचनानुरोधात्। तिङन्तेऽपि प्रवृत्तिस्वीकारे भाष्यादिविरोधापत्तिः। किञ्च पक्ववानित्यत्र पाकः कर्मकारकं, क्तवतुप्रत्ययार्थः कर्तृकारकं, कारकाणां क्रियायामेवान्वयः। अर्थात् कारकस्य क्रियाजनकत्वरूपत्वेन क्रियाजनकमिति ज्ञाते का सा क्रियेति आकाङ्क्षोदयेन क्रियाया अपि साध्यरूपायाः साधककाङ्क्षायाश्च परस्परान्वयौचित्येन क्रियात्वमेव हि कारकान्वयितावच्छेदकमिति सिद्धान्तात् पक्ववान् इत्यत्र क्रियाया अभावेन प्रत्यायर्थरय कर्तुः प्रकृत्यर्थेऽन्वयाभावात् 'प्रकृतिप्रत्ययार्थयोष्ठ रितिन्यायो व्यभिचरितः। किञ्च 'प्रत्ययार्थः प्रधानमिष्ठ त्यस्य यः प्रधानं स प्रत्ययार्थः यः प्रत्ययार्थः स प्रधानमेवेति नार्थः अजा, अश्वा, छागीत्यत्र प्रत्ययार्थस्त्रीत्वस्यैव प्राधान्यपत्तेः। छाग्यादेरनापत्तेश्च। एतेनेदमर्थादापतति यद् न्यायोऽयमौत्सर्गिको बोधो हि व्युत्पत्त्यनुसाराद् भवति। अत एव भावनाप्रकारकबोधं प्रति विशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमिति व्युत्पत्तिबलात् प्रथमान्तविशेष्यको बोधः। लक्षणायां कचतस्त्रस्यति वदनमित्यादौ सम्बन्धितावच्छेदकराहुत्वादिनैव बोधस्य त्रासाधायकस्योपपत्तिः। कचतादिशक्यतावच्छेदकरूपेण लक्ष्यार्थबोधाङ्गीकारे तदनुपपत्तिः। घटः कर्मत्वमानयनं कृतिरित्यादौ विपर्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधः, न तु तद्व्युत्पत्तिरहितानाम्। निराकाङ्क्षत्वान्न ततौ बोधः। बोधस्य व्युत्पत्त्यनुसारित्वादेव प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् इत्याह भगवान् पाणिनिः। प्रत्ययार्थः प्रधानमिति वचनं न कार्यम्। अर्थस्य अर्थावबोधस्य अन्यप्रमाणत्वात् व्युत्पत्त्यनुसारित्वात्। किञ्च किङ् कृतमिति प्रश्ने पक्वमित्युत्तरम्। पक्वमित्यत्र भावनायाः प्रतीतिदर्शनात् कस्य भावना वाच्या? धातोर्निष्ठाप्रत्ययस्य वा? धातोर्भावनावाच्यत्वे तु मीमांसकमतासङ्गतिः। निष्ठाप्रत्ययस्य भावनाजयत्वे गौरवं भवति। किञ्च, भावनायाः प्रत्ययार्थत्वात्कृदन्तस्थलेऽपि व्यापारविशेष्यकबोधापत्तिः। अथोक्तं कौण्डभट्टेनंकिङ्कार्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि, किञ्च क्रियावाचकतां विना धातुत्वमेव न। कार्यमित्यत्र ऋहलोर्ण्यत् इत्यनेन कर्मणि ण्यत्प्रत्ययो भवति। पचनीयमित्यादौ कर्मणि चानीयर्। आदिना ज्योतिष्टोमयाजीत्यादौ करणे उपपदे कर्तरि णिनिः। मीमांसकमते आख्याताभावेन क्रियाया अभावात् विना क्रियां कारकत्वासम्भवेन कारकवाचकप्रत्ययानुपपत्तिः। न च गम्यमानक्रियामादाय कारकयोगान्न दोष इति वाच्यम्, तिङन्तेऽपि गम्यमानक्रियामादायैव कर्तृकर्मार्थकप्रत्ययोपपत्तौ तिङ्संज्ञकाख्याते भावनया वाच्यत्वासिद्ध्यापत्तेः। न च कृदन्तस्थले लिङ्गसंख्यान्वयानुरोधात्

कृतः कर्तुर्वाच्यत्वमावश्यकम्। कृदर्थकर्त्रा भावनाया आक्षेपात् तस्या अवाच्यत्वेऽपि प्रतीतिर्भविष्यति–इति वाच्यम्, आख्यातेऽपि सङ्ख्यान्वयोपपत्तये कर्त्ता वाच्यः स्यात्। तेन व्यापारस्याक्षेपात्तिङन्तस्थलेऽपि आक्षेपादेव व्यापारस्य प्रतीतिसम्भवे तिङ्वाच्या भावनेति सिद्धान्तासङ्गतिः। पक्ववान् इत्यादौ कालकारकान्वयानुरोधाद् भावनाया अपि वाच्यत्वस्यावश्यकत्वाच्च। 'क्रियाभेदाय कालस्तु संख्यासर्वस्य भेदिका' इति वाक्यपदीयवचनात् कालकारकयोः क्रियायामेवान्वयः। किञ्च पुरुषो राज्ञो भार्या देवदत्तस्य, राजसम्बन्धी पुरुषः, देवदत्तसम्बन्धिनी भार्या इत्यन्वयविवक्षायां राज्ञो भार्या इत्यनयोः पदयोरसामर्थ्याद्यथा न समासस्तथा नखैर्भिन्नः नखभिन्नः, हरिणा त्रातो हरित्रात इत्यादवौ 'कर्तृकरणे कृता बहुलम्' इत्यनेन समासो न स्यात्। असामर्थ्यात् कारकाणां क्रियाद्वारा सामर्थ्यमिति सिद्धान्तः। न च दध्योदन इत्यत्र दध्ना निःसृत ओदनः गुडधाना इत्यत्र गुडेन मिश्रिता धाना इत्यर्थे अव्याहृतक्रियामादाय यथा दध्योदन इत्यादौ समासस्तथा नखभिन्न इत्यादौ अध्याहृतक्रियाद्वारा सामर्थ्यमादाय समासः स्यादिति वाच्यम् तत्र अन्नेन व्यञ्जनम्, भक्ष्येण मिश्रीकरणमितिसूत्रस्यारम्भसामर्थ्यात् अगत्या गम्यमानक्रियाद्वारा सामर्थ्यमादाय समासेऽपि हरिकृतमित्यादौ साक्षाद्धात्वर्थान्वयेन उपपद्यमानस्य कर्तृकरणे इत्यस्य आक्षेपेण परम्परा-सम्बन्धे ऽप्रवृत्ते। न चैकक्रियान्वयित्वमेव सामर्थ्यमिति नोक्तदोष इति वाच्यम्, असूर्यम्पश्येत्यादेः असमर्थसमासत्वानुपपत्तेः। इष्टापत्तिस्तु कर्तुमशक्या। कृतः सर्वो मृत्तिकया इत्यत्र कृतसर्वमृत्तिक इत्यापत्तेः। यथाऽसमर्थसमासः 'सह सुपे' त्यनेन भवति, तथा कृतसर्वमृत्तिक इत्यत्रापि स्यात्। किञ्च मीमांसकमते भावयति घटमितिवद् घट भवतीति प्रयोगापत्तिः। धत्वर्थफलाश्रय-त्वरूपकर्मत्वसम्भवात्। न चाख्यातार्थव्यापारायश्रत्व कर्तृत्वं, कर्तृसज्ञयाकर्मसंज्ञया बाध नान्न द्वितीयेति वाच्यम्। पाचयति देवदत्तो विष्णुमित्रेणेत्यत्र प्रयोज्यस्य विष्णुमित्रस्याख्यातार्थ-व्यापाराश्रयत्वाभावेनाकर्तृत्वात् तृतीयानापत्तेः। ग्राम गमयति देवदत्तो विष्णुमित्रमित्यत्र प्रयोज्यस्य विष्णुमित्रस्य आख्यातार्थव्यापाराश्रयत्वाभावेनाकर्तृतापतौ कर्तुरीप्सित ममित्यनेन प्रतिकर्तृनिष्ठव्यापारजन्यफलस्म्बन्धिन एव कर्मसंज्ञाविधानेन मीमांसकमते विष्णुमित्रस्या-कर्तृतया तद्व्यापारजन्यफलाश्रयस्यापि ग्रामस्याकर्मकत्वेन तद्वाचकपदोत्तरं द्वितीयानापत्तिः। विष्णुमित्रस्य करणत्वे णिचोऽसम्भवश्च। धात्वर्थव्यापारजन्यफलाश्रयस्यैव कर्मत्वाङ्गीकारे णिजन्तकर्मतैव न स्यात्, न गमिकर्मता। एवञ्च ग्रामाय गमयति देवदत्तो विष्णुमित्रम् इत्यत्र चतुर्थी न स्यात्। 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इत्यनेन गत्यर्थकर्मणि एव चतुर्थीविधानात् किञ्च णिजन्तस्थले प्रयोज्यप्रयोजकव्यापारद्वयमपि आख्यातार्थः, तदाश्रयत्वाद्देवदत्त्यज्ञदत्तयोः कर्तृत्वमित्यपि न, आख्यातस्य व्यापारद्वयाभिधानयकत्वेन विष्णुमित्रस्य कर्तृत्वोपपादनेनऽपि तत्कर्तृत्वस्य आख्यातपदाीधानात् देवदत्तपदोत्तरमिव विष्णुमित्रपदोत्तर तृतीयादौर्लभ्यम्। एवमाख्यातार्थव्यापाराश्रयत्वस्य उभयोरपि अविशिष्टत्वात् प्रधानव्यवहारोच्छेदापत्त्या हेतुमपि चेति अनुशासनविरोधश्च। न च णिजाख्यातार्था-न्यतरार्थव्यापाराश्रयत्वं कर्तृत्वम्, मीमांसकमते फलमात्रस्य गणपठितधात्वर्थत्वेन तदुनकूलणिजर्थव्यापारश्रयत्वेन विष्णुमित्रस्यापि कर्तृत्वं सुवचमिति वाच्यम्। आख्यातार्थ-

व्यापाराश्रयत्वस्य केवलान्वयितयाऽव्यावर्तकत्वेन आख्यातं तद् वाक्यस्थत्वेन अवश्यं विशेषणीयम्, तस्मिन् प्रयोगे य आख्यातार्थः तदाश्रयः कर्त्ता इत्यर्थे आख्यातशून्ये देवदत्तः पक्तेति कृदन्ते देवदत्तस्याकर्तृतापत्तिः। किञ्च, भूवादयो धातव इति सूत्रे भूश्च वाश्चेति द्वन्द्वः। व्यवस्थाप्रकारवाचिनोरादिशब्दयोरेकशेषः। आदिश्च आदिश्च आदी भूवौ आदी येषाम् ते भूवादयः। भूप्रभृतयो वासदृशा धातवः। सादृश्य च क्रियावाचकत्वेन। तथा च क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वम् इति धातुलक्षणम्। मीमांसकमते भूवादयो घातव इति सूत्रस्य वैयर्थ्यापतिः, धातोः क्रियावाचकत्वाभावात्। न च क्रियापदेन क्रियते व्यापारेण निष्पाद्यते इति व्युत्पत्त्या फलस्यापि ग्रहणात् फलवाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वम् इति लक्षणस्वीकारात् न सूत्रस्य मीमासंकमतेऽपि वैयर्थ्यमिति वाच्यम्,

*धात्वर्थत्वं क्रियात्वं चेद् धातुत्वं च क्रियार्थता।*
*अन्योन्यसंश्रयः स्पष्टः तस्मादस्तु यथाकरम्।*

इति कौण्डभट्टोक्तेः। यदि क्रियात्वं धात्वर्थत्वं तर्हि धातुत्वज्ञाने तदर्थत्वरूपक्रिया-त्वज्ञानमपेक्षितम्। क्रियात्वज्ञाने च क्रियात्वावच्छिन्नवाचकत्वघटितधातुत्वज्ञानमिति अन्योन्याश्रयापत्तिः। न च भ्वादिभिन्नभिन्नन्वमन्यतमत्वमिति लक्षणस्वीकारात् न भूवादय इति सूत्रस्य वैयर्थ्यम् एतादृशलक्षणस्वीकारे भूवादय इति सूत्रस्य वैयर्थ्यापत्तिः। तस्माद् व्यापारसन्तानः क्रिया। तद्वाचकत्वे सति भ्वादिगणपठितत्वम् धातुत्वम्। न च सत्तादीन् फलांशान् अन्यतमत्वेन आदाय सत्ताद्यन्यतमवाचकत्वे गणपठितत्वं धातुत्वम्, धात्वर्थत्वाद् सत्तादीनां क्रियाशब्देन व्यवहारो भाष्यादौ कृतोऽप्युपपत्स्यत इति वाच्यम् अन्यतममध्ये विकल्पयतीति प्रयोगनुसारात् विकल्पस्यापि प्रवेशावश्यकत्वेन तदर्थके वेत्यव्यये गणपठितत्वसत्त्वेनातिव्याप्तिः। न च अस्ति-भवति-विद्यतीनां कथं धातुत्वम्, क्रियाप्रतीत्यभावात्। अत आह-

*अस्त्यादवपि धर्म्यंशे भाव्येऽस्त्येव हि भावना।*
*अन्यत्रशेषभावात्तु सा तथा न प्रकाशते।।*

अस् भुवीत्यादौ फलांशे भावे भाव्यत्वेन विवक्षिते अस्त्येव, प्रतीयत एव। अयमाशयः-स ततो गतो न वेति प्रश्ने महता यत्नेन अस्ति इति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव। उत्पत्त्यादिबोधने व्यापारस्य सुतरां प्रतीतिर्भवति। यथा-

*रोहितो लोहितादासीद् धुन्धुस्तस्य सुतोऽभवत्।*

किञ्च भावनाया धात्ववाच्यत्वे लडादिव्यस्था न स्यात्। भावनाया एव वर्तमानत्वादिविवक्षायां लडादिविधानात्।

*क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका*

इति हरिवचनात्। नन्वेवम् अस्त्यादौ व्यापारस्य सत्त्वे अस्तीतिकथने व्यापारस्य स्पष्टतया प्रतीतिः कस्मान्न भवतीति, सत्यम्। भावनायाः फलसामानाधिकरण्यात् व्यापारस्य

स्पष्टतया प्रतीतिर्न भवति। न च सकर्मकगम्यादिस्थलेऽपि फलसामानाधिकरण्यसत्त्वात् भावनाप्रतीतिर्न स्यात् इति चेन्न। भावनानधिकरणवृत्तिफलसामानाधिकरण्यं भावनानिष्ठं स्वरूपतो भावनाप्रतिबन्धकम्। न तु तज्ज्ञानापेक्षया। तथा च गम्यादिस्थले संयोगस्य भावनाधिकरणग्रामादिवृत्तित्वात् न तत्सामानाधिकरण्यं भावनाप्रतीति स्थगयति। आत्मधारणानुकूलव्यापारार्थके घटोऽस्तीत्यादौ फलव्यापारयोः समानाधिकरण्याद् भावना स्पष्टं न प्रतीयते। न चात्माऽस्ति, दिगस्तीत्यादौ दिगात्मकर्तृकसत्तया नित्यत्वात्कथं भावनाप्रतीतिरिति वाच्यम्, स्वरूपधारणानुकूलव्यापारस्यैव तत्रास्त्यर्थत्वात्। एवञ्च पच्यते तण्डुलः स्वयमेव इत्यादिस्थले आश्रयातारूपव्यापारस्य यथा साध्यत्वेन भानम्, तथाऽऽत्मास्तीत्यादावपि तस्या एव साध्यत्वेन भानम्। न चैवं किं करोतीति प्रश्ने पचतीत्युत्तरस्येव अस्तीत्युत्तरस्यमपि सयादिति कच्यम्, इष्टापत्तेः। आसन्न विनाशं कञ्चियु द्दिश्य किं कयेति इति प्रश्ने पल्बति पयतीत्युत्तरस्येन अस्तीत्युत्तरस्य सर्वसम्मतत्वात्। अन्यत्र सुस्थतया निश्चिते किं करोतीतिप्रश्ने पाकीदिविशेषगोचर एवेत्यधारणात् अस्तीति नोत्तरम्। न चैव भावनायाः फलनियतत्वात् फलाश्रयस्य च कर्मत्वाद् सर्वेषां क्रियावाचकत्वे सकर्मकतापत्तिरिति वाच्यम्, ''फलव्यापारयोरेकनिष्ठतायामकर्मकः, धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः'' इत्युक्तेः। फलव्यापारयोर्भिन्नाधिकरणवृत्तितवेऽकर्मकत्वम्, अत एव गभ्यादौ संयोगस्य द्विष्ठत्वेन कर्तृनिष्ठत्वेऽपि नाकर्मकत्वव्यवहारः। ग्रामेऽपि संयोगस्य सत्त्वात्। फलव्यापारयोराश्रयभेदे सकर्मकः। न चैवमात्मानं जानाति, इच्छतीत्यादौ फलव्यापरयोरेकाधिकरणवृत्तित्वादर्थात् ज्ञानादिरूपफलस्य तदनुकूलात्मकः संयोगरूपव्यापारस्य च एकत्र कर्तरि सत्त्वात् अकर्मकत्वापत्तिरिति वाच्यम्, शरीरावच्छिन्न आत्मा एकः अन्तःकरणावच्छिन्न आत्मा चान्यः। तत्राद्यः कर्म, द्वितीयः कर्त्ता, फलतावच्छेदकवि-षयतासम्बन्धेन शरीरात्ममनः फलाश्रयत्वात्कर्मत्वम्। व्यापारतावच्छेदकसमवायसम्बन्धेन व्यापाराश्रयत्वात् अन्तरात्मनः कर्तृत्वम्। एवञ्च 'साधुत्वज्ञानविषया सैषा व्याकरणस्मृति' इति वाक्यपदीयात् धातुर्भावनाविषयकबोधजनकतावान् इति सूत्रकारादिभिश्च बोधिते भावनारूपार्थे आख्यातमसाधु धातुश्च साधुरिति लब्धम्। तथा च चतुर्थ्यर्थे तृतीयाप्रयोगवत् धात्वर्थभावनामाख्यातप्रयोगे याज्ञे कर्मण्यसाधुशब्दप्रयोगात् नानृतं वदेदिति निषेधल्लङ्घनप्रयुकत प्रायश्चित्तं मीमांसकानां स्यादेव। किञ्च भावनायास्तिङर्थत्वे कर्तरि कृदिसूत्रादनुकृष्टस्य कर्तरिपदस्य लः कर्मणीति सूत्रे व्यापारार्थकत्वे कर्तरि कृदित्यत्रापि व्यापारार्थकत्वापत्तिः। तुल्ययोगन्यायात्। मीमांसकैः णमुलादिकृत्संज्ञकप्रत्ययस्थले व्यापाराश्रयवाचकस्यैव स्वीकारात् लाघवात् अत्र कर्त्रादिपदं धर्मपरमेव, तदाकृत्यपि तदेव स्यात्। किञ्च मीमांसकानां कृत्प्रत्ययस्य यथा कर्तृवाचकत्व, कृत्प्रत्यार्थकर्त्रा भावनाया आक्षेपाद्यथा कृदन्तस्थले भावनायाः प्रतीतिर्भवति, तथा तिङर्थः कर्त्ता स्वीक्रियताम्। तिङर्थकर्त्रा भावनाया आक्षेपादेव प्रतीतिर्भविष्यतीति तिङ्वाच्या भावना इति सिद्धान्तासङ्गतिः। न चाक्षेपस्य प्राधान्यं न भवति यथा कृदन्तस्थले भावनाया आक्षेपेऽपि भावनाविशेष्यकबोधो न भवति तथा तिङन्तेऽपि भावनाविशेष्यकबोधो न स्यात् एतदर्थं तिङ्वाच्या भावना स्वीकर्तव्या। जाति-

शक्तिवादे घटादिपदानां घटत्वे शक्तिः। घटमानयेत्यादौ घटत्वानयनासम्भवात् आक्षिप्तव्यक्तेरपि यथा प्राधान्यं तथा व्यापारस्याक्षेपेऽपि प्राधान्योपपत्तेः। न च पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनात् करोतिस्तिङामेव विवरणम्, पाक धातोः। तथा चास्माद्विवरणात् भावनायाः तिङ्वाच्यत्वम् सिध्यतीति चेन्न। पाकानुकूलव्यापारवतः कर्तुरपि विवरण-विषयत्वसम्भवात्। न च पचतीत्यस्य कर्मबोधकपदाभावेऽपि पाकं करोतीत्यशब्दार्थकर्मत्व विवरणं यथा भवति, यथा वा इतरेतर योगद्वन्द्वे घटपदौ इत्यादौ समुच्चयबोधकपदा भावेऽपि समुच्चयाँशविवरणं भवति तथा कर्तुर्विवरणं तात्पर्यार्थविवरणं, भावनाया एव विवरणं, वास्तविकम् इति वाच्यम्, विवरणस्य स्वस्वव्युत्पत्त्यनुसारित्वात् नाभीष्टार्थसाध कत्वम्। न चाख्यातस्य कर्तृवाचकत्वे भावनाक्षिप्ता गुणीभूतैव प्रतीयेत, न प्राधान्येन, अन्यथाऽऽक्षेपानुपपत्तिः, उपपादकस्य उपपाद्यफलकत्वात्। रात्रिभोजनवत्। एवमपि यथा पक्ता देवदत्तः इत्यत्राभेदान्वयो भवति एव देवदत्तः पचति इत्यत्र तिङर्थकर्तरि देवदत्तस्याभेदान्वयात् एकत्वविशिष्टदेवदत्तहभिन्नकर्तृकविक्लित्त्यनुकूलो

वर्तमानकालिको व्यापार इति बोधे भवति। मीमाँसकमते व्यापारस्य तिङर्थत्वात् अभेदान्वयो न स्यात्। एतदर्थं तिङः कर्तृवाचकत्वमावश्यकम्। अन्यथा मीमाँकसमते आध राधेययोरभेदान्वदर्शनात् अभेदान्वयानुपपत्तिः। न च नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दाबोध प्रति विशेष्यविशेषणवाचकपदयाः समानविभक्तिकत्वज्ञानं कारणम्, तच्च समानविभक्तितवं विशेषणवाचकपादनिष्ठ। विशेष्यवाचकपदप्रकृकविभक्तिसजातीयविभक्तिकत्वरूपमेव, साजात्यं च विभक्तिविभाजक प्रथमात्वादिना। देवदत्तः पचतीत्यादौ समानविभक्तिकत्वाभावात् वैयाकरणनयेऽपि कथमभेदान्वयः? सत्यम्। सोमेन यजेत इत्यत्र सोमाभिन्नयागेनेष्ट भावयेत्, स्तोकं पचतीत्यादौ विक्लित्तियपफलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वेन तत्र स्तोकपदार्थस्याभेदान्वयो भवति। अभेदबोधे समानविभक्तिजन्योपस्थितेः कारणत्वे तु पूर्वोक्तस्थलेषु अभेदान्वयानुपपत्तिः। समानविभक्तिजन्योपस्थितिविराहात्। तथा च देवदत्तः पचतीत्यादाभेदान्वयार्थं तिङः कर्तृवाचकत्यमावश्यकम्। न च तिङर्थः व्यापार एवं व्यापारश्रये लक्षणया अभेदान्वयो भविष्यतीति न दोष इति व च्यम्, तिङाख्यातादियौगिकानामपि द्रव्यवाचित्वानापत्तेः। एवं वैश्वदेवी आमिक्षेत्यादितद्धितानामपि अनेकमन्यपदार्थे इत्यनुशसनेने पिङ्ग अक्षिज्ञणी यस्याः, विश्वे देवा देवता अस्या इति विग्रहदर्शनात् प्रधानषष्ठ्यर्थे एवानुशासनलाभात्। यथा च अरुणया पिङ्गाक्ष्या एकहायन्या सोम क्रीणातीति वाक्ये द्रव्यानुक्तत्वात् क्रियाया द्रव्ये एवान्वयः इति सिद्धान्तात् आरुण्यस्य गुणात्वेन क्रियान्वयाभावात् कथ तृतीयेति सन्दिह्य पिङ्गाक्ष्याद्रिव्याद्वारा क्रियान्वयप्रतिपादकस्यसिद्धान्तासङ्गतिः। पिङ्गे अक्षिणी यस्या इति विग्रहे प्रधानषष्ठ्यर्थे बहुवीहिः। एवमेकं हायनं यस्या इति विग्रहे बहुब्रीहिः। षष्ठ्यर्थः सम्बन्धः। तथा च पिङ्गाक्षीसम्बन्धः एकहायनसम्बन्धश्य इत्यर्थो भवति सम्बन्धस्य गुणत्वात् तत्रापि तृतीया न स्यात् इत्याशयेन पिङ्गाक्ष्यादिपदस्य तत्सम्बन्धिनि शक्ति स्वीक्रियते। अर्थात् द्रव्यवाचकत्वम् पिङ्गाक्ष्यादिपदानां मीमाँसकैः स्वीकृतम्। द्रव्यवाचकत्वसाध

कमूलयुक्तेः गवादेः सामानाधिकरण्यस्य लक्षणयैबोपपत्तेः। पिङ्गाक्ष्यादिपदानां यौगिकत्वस्वीकारेऽपि न दोष इति मीमांसकसिद्धान्तासङ्गतिः। किञ्च तिङो भावनावायकत्वे देवदत्तः पचतीत्यादौ तिङा कर्तुरनभिधानात् तृतीयापत्तिः। न चानभिहिते इतयस्य अनभिहितसङ्ख्याके इत्यर्थस्वीकारान्न तृतीयापत्तिरिति वाच्यम्, एवमपि पक्ता देवदत्त इत्यत्र तृचा सङ्ख्याया अनभिधानात् तृतीयापत्तिः। किञ्च गुरुः शिष्याभ्यां पाचयतीत्यत्र प्रयोजकव्यापारस्य णिजर्थत्वे प्रयोज्यव्यापार एवाख्यातार्थः। तथा चाख्यातेन प्रयोज्यव्यापारस्योक्तत्वात् शिष्याभ्यामिति द्विवचनानुपपत्तिः। गुरोरनुक्तत्वेन तृतीयापत्तिश्च। किञ्च पचति, पक्ष्यति, पक्ववान् इत्यादौ फूत्कारादिप्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पने गौरवम्। किञ्च फूल्करादेः प्रत्ययार्थतवे गच्छतीत्यादितः फूत्कारादि प्रतीतिवारणय फूत्कारदिबोधं प्रति पचिसमभिव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम्। किञ्च फत्कारादेः प्रत्ययार्थत्वें गच्छतीत्यादितः फूत्कारादि प्रतीतिवारणाय फत्कारादिबोध प्रति पचिसमकभव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम्। किञ्च फलस्य धातुना तदाश्रयस्य चाक्षेपेणैव लाभसम्भवेन लः कर्मणीत्यस्य वैयर्थ्यापत्तिः। कर्मकर्तृकृतां कारकभावनोभयवाचकत्वे गौरवाच्च।

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।<br>
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिघीयते।।<br>
गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।<br>
बुद्ध्य प्रकल्पिताभेदः क्रियोति व्यपंदिश्यते।।

इति भूवादिसूत्रस्थभाष्यार्थप्रतिपादकहरिग्रन्थादपि धात्वर्थः क्रियैव लभ्यते। एकावयवेऽपि समूहरूपारोपात् अधिश्रयणकालेऽपि पचतीति व्यवहारः। तदुक्तं हरिणा-

एकदेश समूहे वा व्यापाराणां पचादयः।<br>
स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः।।

तस्मात् फलव्यापारौ धात्वर्थौ। कर्तृकर्मसङ्ख्याकालाः तिङर्थाः। अर्थात् कर्तृप्रत्ययस्थले कर्तृसंख्याकालाः, कर्मप्रत्ययस्थले चकर्मसङ्ख्याकालाः। सङ्ख्या च कर्तृप्रत्ययस्थले प्रकारतया कर्तर्यन्वेति, कर्मप्रत्ययस्थले च कर्मणि, तथा च सङ्ख्याप्रकारबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्यकारणभावः। कर्तृकर्मणी फलव्यापारयोर्विशेषणो, कालस्तु व्यापारे विशेषणम्। यथा वर्तमाने लट् इत्यस्य धात्वर्थे वर्तमाने लड् भवति। सङ्ख्यावत् कर्तृकर्मणोरेव न पचतीति प्रयोगानुपपत्तिः। तस्मात्कालस्य न कर्तरि, नापि कर्मण्यन्वयः, नापि फले। फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीतिप्रयोगानुपपत्तेः। पक्ष्यतीतिप्रयोगापत्तेश्च। एवञ्च देवदत्तः पचतीतिवाक्यात् एकतविशिष्टदेवदत्ताभिन्नकर्तृकविक्लित्यनुकूलो वर्तमानकालिको व्यापार इति बोधः। कर्मप्रत्ययस्थले पच्यते ओदनो देवदत्तेनेत्यादावपि व्यापारविशेष्यकः। अत एव सुप आत्मनः क्यच् इति सूत्रे भाष्ये इष्टः पुत्रः, इष्यते पुत्र इतयर्थे क्यचमाशङ्क्य स्वशब्देनोक्तात्वान्न इति समाहितम्। इष्टश दसामानधिकरण्यात् पुत्रार्थे कर्मत्वावगतापवि पुत्र इति सुबनतं न

कर्मवाचि। न ततः क्यजिति तद्भाव। स्वं कर्मत्वं तद्वाचकशब्देन पुत्रगतं कर्मत्वमुक्तम्। न तु पुत्रशब्दस्य तत्र वृत्तिः। द्वितीयं समाधानमाह–

वृत्त्यर्थावबोधकं वाक्यं विग्रहः इति वृत्तिवाक्ययोः समानार्थत्वात् इष्टः पुत्रः, इष्यते पुत्र इति वाक्ये फलं विशेष्यम्। वृत्तौ व्यापार इयि समानार्थत्वाभावान्न क्यच्। अस्माद्भाष्यात् कर्तृप्रत्ययस्थले व्यापारविशेष्यको बोधः कर्मप्रत्ययस्थले च फलविशेष्यको बोधः। दीक्षितमते चोभयत्र व्यापारविशेष्यकबोधस्यैव सत्त्वैन समानार्थत्वाभावादिति भाष्यासङ्गतिः। तत्र क्रिया साध्यसाधानभेदेन द्विविधा। साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम्। यथा पचतीतयादौ धातुवाच्य क्रिया। हिरुगाद्यव्ययानां साध्यताभावेन क्रियावाचकत्वव्याहरः क्रियामात्रविशेषणत्वाद् भवति। सिद्धत्व च क्रियान्तराकाङ्क्षोपस्थापकावच्छेदकवैजात्यवत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वम्। यथा पाक इत्यादौ घञादि वाच्यम्। साध्यत्वं तु सर्वत्र ध ातुप्रतिपाद्यम्। न चैवं पचति भवतित्यादिभाष्योक्तवाक्ये भुक्त्वा गच्छतीत्यादौ च भवति भुक्त्वेत्यादीनां क्रियान्तराकाङ्क्षादर्शनेन कारकान्तरान्वयानापत्तिः, धातुत्वानापत्तिश्च। तस्मात् साध्यतवं निष्पाद्यत्वमेव। निष्पाद्यत्वरूपसाध्यत्वप्रकारक एव बोधः। घञादिवाच्यक्रियायाः सिद्धरूपतवम्। धातुवाच्यक्रियायाः साध्यरूपत्वम्। अत एव सुट्कात्पूर्व इति सूत्रे भाष्ये "पूर्व धातुः साधनेनं युजयते पश्चादुपसर्गेण। साधनं हि क्रियां निर्वतयति। तामुपसर्गो विशिनष्टि। अनिर्वृत्तस्य चार्थस्य उपसर्गेणं विशेषः शकयो वक्तुम" इत्युक्तम्। अस्माद् भ ष्याद् धातुवाच्यक्रियाया निष्पाद्यरूपसाध्यत्वेन भानमिति स्फुटीभवति। एवं 'कृदभिहितो भावो द्रव्यवद्भवति' इति भाष्यात् घञादिवाच्यक्रियायाः सिद्धत्वम्। घटं करोतीत्यादौ द्रव्यस्यापि घटस्य साध्यत्वेन प्रतीतिदर्शनात् द्रव्ये साध्यत्वापत्तिस्तु न। करोतिपदादिसमभिव्यवहारत्तथा प्रत्ययेऽपि स्वतो घटादिपदात् द्रव्यस्य सिद्धत्वेनैव प्रतीतेः। न च नागेशमते भावप्रधानमाख्यातमिति यास्कवचनासङ्गतिः। क्रियापदेन फलसग्रहणात् कर्मप्रत्ययस्थले नागेशमते फलविशेष्यकबोधस्यैव सत्त्वादिति वाच्यम्, क्रियते व्यापारेण निष्पाद्यते इति क्रिया, यौगिकव्युत्पत्त्या क्रियापदेन फलस्यापि ग्रहणात्। अत एव कर्मवत्कर्मणा तुल्यक्रिय' इति सूत्रं सङ्गच्छते। कर्मावस्थायां या क्रिया सैव कर्त्रवस्थायां चेत् तदा कर्मवद्भावो भवति। यथा देवदत्तः तण्डुलं पचतीत्यत्र कर्मावस्थायां तण्डुले विक्लित्तिर्वर्तते। तण्डुलः स्वयमेव पच्यते इति कर्त्रवस्थायामपि विक्लित्तिस्तण्डुले एव वर्तते। क्रियापदेन फलर्स्याहणे तु अत्र कर्मवद्भावानुपपत्तिः। तथा च नागेशमते न यास्कवचनविरोधः। एवं फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्, इत्यपि न समीचीनम्, किंतु कर्मसंज्ञकान्वय्यर्थकत्वमकर्मकत्वम्। अत एव अध्यासिता भूमय इत्यत्र अधिशीङ्स्थासां कर्मेति कर्मत्वात् कर्मणि क्तप्रत्ययः सिध्यति। भूषणकारमते अधिपूर्वकास्धातोरकर्मकत्वात् कर्मणि क्तप्रत्ययानुपपत्तिसिति शम्।।

# स्फोटविचारः

घट इत्युक्ते आश्रयत्वेनोपस्थिताकाशविष्ज्ञयकशाब्दबोधवारणाय तद्धर्मावच्छिन्नविषयकशब्दबोधं प्रति तद्धभविच्छिन्ननिरूपितशक्तिज्ञानाध ीनोपस्थितिः कारणम्। आकाशोपस्थितेः घपटपदनिष्ठशक्तिज्ञानाधीनतवाभावात ्नाकाशविषयकशब्दबोधः। तथा च प्रत्येक वर्णा शक्त्याश्रयाः समुदायो वा शक्त्याश्रयः इति पक्षविकलपः। आद्ये द्वितीयादिवर्णोच्चारणवैयथ्यपितिः। प्रथमवर्णोच्चारणादेवार्थप्रतीतिसम्भवात्। नापि संहता वर्णाः शक्त्याश्रयाः। उच्चरितप्रध्वसित्वे यौगपद्यासम्भवात्। उत्पत्तेरभिव्यक्तेर्वा क्षणास्थायित्वात्। क्षणाशब्देन शब्दतन्मात्रद्वारा प्रकृतेः परिणामविशेषः कालोऽभिप्रेयते। मुख्यक्षणस्य प्रत्यक्षाबोध्यत्वेन तदवच्छिन्नवर्णस्यापि अप्रत्यक्षत्वापत्तिः। उच्चरितप्रध्वसित्वं च उच्चारणाधिकारणकालोत्तरकालवृत्तिध्वसप्रतियोगित्वम्। एवं च इकोयणचीत्यादौ अयं पूर्वः अयं परः इति प्रत्यक्षविषयो य इदंशब्दस्तद्विषयो योऽयं पूर्व इत्यादिरभिलापः तद्विषयस्य पौर्वापर्यस्य ज्ञान न सम्भवति। नष्टस्य प्रत्यक्षविषयेदमा परामर्शायोगात्। एवं वण्रसमूहरूपपदप्रत्यक्षस्यापि एवंक्रमावगाहिन एव परः सन्निकर्ष इति सूत्रोक्तरीत्या भाष्कृदनुभवसिद्धस्यानुपपत्तिः। न च वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्वमव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् वृह्यते इति पदप्रत्यक्षत्वात् शाब्दबोधोपपत्तिः। अथवा पूर्वपूर्वरर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव स्न्तीति न पदप्रत्यक्षानुपपत्तिः। यद्वा पूर्वपूर्वानुभवजन्यसंस्कारसध्रीचीनचरमवण्रनुभवतः शाब्दबोधो भवष्यितीति वाच्यम्, 'यावद् कारे वाग्वर्तते न तावदौकारे इति येनैव यत्नेन एको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीयः प्रवर्तते' इति तपरसूत्रस्थभायात् पूर्ववर्णनाशोत्तरं यत्नान्तरेण वर्णान्तरोत्पत्तेः। नष्टविद्यमानयोः अव्यवहितोत्तरत्वसम्बन्धस्य वक्तुमशक्यत्वाच्च। विद्यमानयोरेव सम्बन्ध इति सिद्धान्तात्। शब्दजशब्दन्यायेन पदप्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शकत्याश्रयत्वस्य ग्रहानुपपत्तेः। अविद्यमाने वस्तुनि आश्रयत्वाङ्गीकारे नष्टो घटो जलवान् इति व्यवहारापत्तिः।

तृतीये येन क्रमेणानुभवः तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगमकाभावात् सरो रसो, नदी दीन इत्यादौ विपरीतसंस्कारोद्वोधेन प्रत्येकमन्यार्थप्रत्ययापत्तेः। एवं च पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः। तदुक्तम्–'अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्।' पदसमुदायात्मकवाक्यस्य इव वर्णसमुदायरूपपदस्याप्यभावात् उभयोरपि अर्थसम्बन्धः। किञ्च एकं पदमिति बुद्धेः तदेवेदं कृष्णपदमिति बुद्धश्च अनुपपत्तिः। न चैकजातीयबुद्धिविषयत्वौपाधिकी एकबुद्धिविषयत्वौपाधिकी चास्याप्रतीतिरिति वाच्यम्, तज्जातीयमिदं पदम् इति व्यवहारस्याप्यापत्तेः। तदेवेदं पदम्, इति नियमेन व्यवहारच्च। किञ्चैमुच्चारणभेदात् भिन्नेषु शक्तिग्रहासम्भवः। व्यक्तिवाद इव आनन्त्यव्यभिचारात्। व्यभिचारश्च गृहीतशक्तिकस्यैव बोधकत्वम् इति सर्वसिद्ध नियमे बोध्यः। आनुपूर्वी तु तत्तत्कालघटितत्वेन अव्यवहितोत्तरत्वाननुगमात् प्रत्युच्चारणं भिन्नेति तस्या अपि शक्यतावच्छेदकत्वे शब्दान्तरस्य बोधकत्वानापत्तिरूपैव। तादृशाव्यवहितोत्तरत्वेन अनुगमोऽपि तादृशत्वस्य दुर्ज्ञयत्वात् अयुक्त एव। व्यवधानाभावे सति घटज्ञानध्वंसविशिष्टज्ञानविषयत्वमेवानुपूर्वी। तत्परिच्छेदश्च मनसैवेति पक्षेऽपि ज्ञानव्यक्तिभेदेन आनुपूर्वी अनन्तैव। न च चरमवर्णाज्ञानव्यङ्ग्याः तत्तत्पदवृत्तयोऽनन्ता जातयः शक्तत्वावच्छेदकत्वेन कारणातावच्छेदकत्वेन च कल्प्यन्ते इति न दोष इति वाच्यम्, अनन्तजातिकल्पने गौरवात्। पदादेरसत्त्वेन वृत्त्याश्रयत्वासम्भवाच्च। पदानामविद्यमानत्वेन तत्र जातेप्यसम्भवाच्च। उत्पत्तिविनाशवत् वर्णसमुदायरूपदस्य मनुष्यादिवद्भदे 'एक इन्द्राशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेषु अङ्गं भवति' इति भाष्यविरोधापत्तेश्च। अत्रोच्यते। प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रक्षया च लीनसर्वजगत्कामा या चेतनेऽपीश्वरे लीयते। लयश्च अपुनः प्रादुर्भावफलको नाप्यात्यन्तिको नाशः। उत्तरसर्गानुपपत्तेः। नापि सर्वाऽभानम्। प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनोऽनवभासे तदभावस्यैवापत्तेः। किन्तु सुप्तेव तिष्ठति कार्यप्रवृत्त्यभावात्। ततोऽपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्परिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्किा सृष्टिः मायापुरुषावाविर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोरचिदशो बीजम्। चिदचिन्मिश्रोंऽशो नादः। चिदंशो बिन्दुरचिन्छब्देन शब्दार्थोभयसंस्काररूपा अविद्या उच्यते। अस्माद्बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषविरहित ज्ञानप्रधानं सृटयुपयोग्यवस्थाविशेषरूप

चेतनमिश्रं नादमात्रमुत्पाद्यते। एतत् जगदुपादानमेव खपदादिशब्दैर्व्यवह्रियते। तदुक्तम्-

बिन्दोस्तस्माद् भिद्यमानात् खोऽव्यक्तात्मकोऽभवत्।
स एव श्रुतिसम्पन्नेः शब्दब्रह्मेति गीयते।।

एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेन अभिव्यज्यते। ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योगे एव मूलाधारस्थपदवनसस्कारः। तदीाव्यक्त शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्नम् परा वागित्युच्यते।

तदुक्तं हरिणा-

अनादिनिधनं ब्रह्म शब्दतत्त्व यदक्षरम्।
विवर्ततेऽर्थभावने प्रक्रिया जगतो यतः।।

यत इत्यनेन नात्रारम्भावादः परिणामवाो वा विवक्षितः। किन्तु विवर्तवादः। यथा रज्जुः स्वयमविकृतैव सती मायया सर्पाकारेण विवर्तते कारणस्वयपाविरोध ेन कार्यप्रतिभासः, अतो ब्रह्मणो निर्किारत्वात् न नित्यतवविरोधः। तदेव नाभिपर्यन्तमागच्छता तेन वायुाऽभिव्यक्त मनोविषयः पश्यन्तीत्युच्ते। तदुक्तं सूतसंहितायाम्-

सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत्कदाचन।
इति विद्यात्स्वमात्मानं स सामधिः प्रकीर्तितः।।
समाधिस्तु समाधानं जीवात्मपरमात्मनोः।
ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः।।

एतद्द्वयं सूक्ष्मतरसूक्ष्मतममीश्वराधिदैवतं योगिनां समाधौ निर्विकल्पकसविकल्पज्ञानविषयः। ततः हृदयपर्यन्तमागच्छता तेन वायुना दयदेशऽभिव्यक्ततत्तदर्थविशेषतत्तच्छब्दविशेषोल्लेखिन्यां बुद्ध्या विपयीकृता हिरण्यगर्भदेवत्या परश्रौत्राग्रहणायोग्यत्वेन सूक्ष्मा मध्यमा वाक्। स्वयं तु कर्णपिध ाने सूक्ष्मतवरवाय्वभिधातेन उपंशुशब्दप्रयोग च श्रूयमाणा मध्यमा वाक्। एतदवस्थत्रयमपि सूक्ष्मतम-सूक्ष्मतर-सूक्ष्मप्रणवरूपम्। सैव चास्यपर्यन्तं गच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमहात्य परावृत्य तत्तत्स्थनेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयौग्या विराडधिदैवत्या वैखरी वाक्। तदुक्तम्-

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा।।
वैखर्या हि कृतो नादः परश्रवणगोचरः।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते।।

तदुक्तं वाक्यपदीयेऽपि-

स्वरूपज्योतिरेवान्तः परा वागनपायिनी।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते।।

पतञ्जलिना एषा श्रुतिरुद्धृता-

चत्बारि वाक् परिमिता पदानि,
तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति,
तुरीयं वाचो मनुष्या वदन्ति।।

हरिणाप्युक्तम्-

वैखर्यामध्मायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्।।

तख परादीनां मध्ये परापश्यन्त्योर्योगिज्ञानविषयत्वात् मध्यमाया यो नादांशः तस्यैव स्फोटात्मनः शक्त्याश्रयत्वम्। स च स्फोटो यद्यप्येकोऽखण्ड एकैकवर्णोनापि अभिव्यज्यते तथापि अन्त्यवर्णाभिव्यक्तो बोधहेतुः। अत एव नैकवर्णजाभिव्यक्तत्युत्तरमर्थप्रत्ययः। तत्र च व्यञ्जकरूपप्रतिबिम्बनात् तद्रूपरूषितैव स्फोटाभिव्यक्तिरिति एकोऽपि नानात्वमिवापद्यते। यथा जलचाञ्चल्येन इन्दुप्रतिबिम्बस्य चञ्चलत्वेन ग्रहणाम्, यथा वा स्फटिकादेः जपाकुसुमाद्यु पाधिवशात् तद्रूपरूषितस्य भानम्, यथा पुनर्वामुखामणिकृपाणदर्पणाद्यभिव्यञ्जकवशद् वर्तुलत्वादिभानं तथा स्फोटस्यापि।

तदुक्तं हरिणा-

यथा रक्तगुणो तत्त्वं कषाये व्यपदिश्यते।
संयोगिसंनिकर्षात्तु वस्त्रादिष्वपि दृश्यते।।

यथा मणिकृपाणादौ रूपमेकमनेकधा।
तथैव ध्वनिषु स्फोट एक एव विभिद्यते।।

प्रतिबिम्बसमर्पकाश्च संस्कारास्ते च स्थिरा एव। ध्वनिर्द्विविधः प्राकृतो वैकृतश्च। प्राकृतो ध्वनिः स्फोटव्यञ्जकः। प्रकृताज्जातः प्राकृतः। तदुक्तं हरिणा-

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
शब्दस्योर्ध्वमभिव्यक्तेर्ध्वनिभेदे तु वैकृताः।

एवञ्च एकोऽपि स्फोटः प्राकृतध्वनिभेदादू भिन्नभिन्न इव प्रतिभाति। वस्तुतस्तु एक एव। न च अनेककालिकतत्तद्वैखर्याभिव्यक्तेरौपाधिकनानातवात्। उपाधिभिन्नध्यञ्जकाभावात् न वणराहित्येन तत्प्रत्यक्षत्वम्, येन क्रमेण च चित्ते संस्कारस्तेनैव क्रमेण व्यञ्जकरूपरूषितस्फोटस्य स्वीकारात् न सरो रस इतयनयोरविशेषः। तथा चाष्टविधः स्फोटः। वर्णास्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः, वर्णपदजातिभेदेनाष्टौ स्फोटाः। सुबन्ततिङन्तपदजन्यबोधपूर्वकवाक्यचरमर्णाभिव्यक्तस्फोटस्य बोधकत्वे वाक्यस्फोटः, इति व्यवहारः। प्रकृतिप्रत्ययजन्यबोधभावे सति पदस्फोटेन बोध ेऽखण्डपदस्फोटः। पदजन्यबोधाभावे सति वाक्यस्फोटेन बोधेऽखण्डवाक्यस्फोटः। वर्णपदवाक्यगतजातिव्यङ्ग्यस्फोटैर्बोधे क्रमशः वर्णजातिस्फोटः, पदजातिस्फोटः वाक्यजातिस्फोटः इत्चुच्यते। अत एव भाष्ये 'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रतययो भवति स शब्दः' इत्यत्र येनेति एकवचनं प्रयुक्तम् कैयटेनापि उच्चारितेनेत्यस्य प्रकाशितेनेत्यर्थः कृतेः। तणरसूत्रे भाष्येऽपि 'ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते, अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः', ॠलृक्सूत्रे भाष्येऽपि 'उभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवति' इत्युक्तम्। तत्र कौण्डभट्टेन सर्वविधेष्वपि स्फोटेषु वाक्यस्फोट एव सिद्धान्तरूपेण स्वीकृतः। स्पष्टमेवोक्तं तेन 'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः' साधुशब्देऽन्तर्गता हि बोधका न तु तत्स्मृताः इति कारिकायां वाक्यस्फोटातिरिक्ता नामन्येषामवास्तवत्वबोध नाय वाक्यपदोपादानम् प्रथमं वर्णस्फोटो निरूप्यते-

नैयायिकाः स्थानिनां वाचकत्वं स्वीकुर्वन्ति। वैयाकरणा आदेशानां वाचकत्वम्। तथाहि-

व्यवस्थितेर्व्यवहृतेस्तद्धतुन्यायतस्तथा।
किञ्चाख्यातेन शत्राद्यैर्लडेव स्मार्यते यदि।।
कथ। कर्तुरवायत्ववाच्यत्वे तद्विभावय।

व्यवस्थानुरोधात् पचति राम इत्यादौ प्रयोगानतर्गता: तिब्बिसर्गादय एव वाचका:। पचतीत्यादौ लकारमजानतोऽपि जनस्य बोधोयात्। स्थानिनामपि तत्तद्वैयाकरणै: स्वेच्छया भिन्नानामभ्युपगमात् सर्वत्र शक्तिस्वीकारे आनन्त्यापत्ति:, व्यभिचारश्च। किञ्च स्थानिना वाचकत्वे भूत इत्यतोऽपि भवनकर्तृत्वबोध ापत्ति:। तद्वारणाय भवतीति समभिव्याहारस्य कारणत्वकल्पने गौरवम्। किञ्च लकारस्यैव वाचकत्वे कृत्तिङो: कर्तृभावनावाचकत्वव्यवस्था न स्यात्। एवं च समभिव्याहृता वर्णास्तत्समुदायो वा वाचक इत्यत्र विनिगमकाभावात् प्रकृतिप्रत्यायानां वाचकत्वे वर्णस्फोट: सिद्ध:। सम्प्रति पदस्फोट उच्यते-

घटेनेत्यादिषु नहि प्रकृत्यादिभिदा स्थिता।
वस्नसादाविवेहापि सम्प्रमोहो हि दृश्यते।।

घटेनेत्यादौ घटे इति प्रकृति:, न इति प्रत्यय:, घट इति प्रकृति:, एन इति प्रत्ययविभागस्य सर्वे सव्रपदादेशा इति सिद्धान्तेन प्रत्येकं प्रकृतिप्रत्यययोर्ज्ञानाभावेऽपि समुदायाद् बोधदर्शनेन पदस्फोट:। एव

हरेऽवेत्यादि दृष्ट्वा वाक्यस्फोट विनिश्चिनु।
अर्थे विशिष्य सम्बन्धाग्रहण चेत्समं भवेत्।।
लक्षणादधुना चेत्तत् पदेंर्थेऽप्यस्तु तत्तथा।

इत्यादिना वाक्यस्फोटो निरूपित:। तथाहि हरेऽव, विष्णोऽवपरदयोरेङ: पदान्तादति इति एकादेशे सति प्रत्येकं पदज्ञानेऽपि समुदायाद्बोधोदयेन वाक्यस्फोट: सिद्ध। अर्थात् पदै: पदार्थबोधवत् वाक्येन वाक्यार्थबोध इति पदार्थनिरूपिता शक्तिर्यथा पदे विद्यते तथा वाक्यार्थनिरूपिता शक्तिर्वाक्ये इति पदस्फोदवाकयस्फोटो सिद्धौ। यदा वा घटादिपदार्थबोध ेवर्णसमभिव्याहाररूपपदशशिक्तज्ञानं कारणमेवं विशिष्टवाक्यार्थबोध ेपदसमभिव्याहाररूपवाक्यशक्तिज्ञानं कारणम्। विषयतासम्बन्धेन शाब्दाबोधमात्रे वृत्तिज्ञानस्य हेतुत्वात् वाक्ये शक्त्यस्वीकारे बोध एव न स्यात्।

